# Every Saturday will be FUNDAY for children

## of Maharashtra and elsewhere

MID-DAY
FUNDAY
WITH CHANDAMAMA

An 8-page supplement to **MID-DAY**
with a lot of variety and in glorious colour
designed by CHANDAMAMA,
is being issued from MARCH 11, 2000.

**HERE'S AN INVITATION OFFER**
TO READERS OF **MID-DAY**

Subscribe to **CHANDAMAMA** (in any one of the 12 languages) at the SPECIAL RATE of Rs 96* for 12 issues (instead of Rs.120).

Reserve your
Saturday
MID-DAY
now!

## *What you have to do:*

Cut out the coupon appearing in
MID-DAY – FUNDAY supplement
and send it to the address below
along with a cheque/DD for Rs 96.

**PUBLICATION DIVISION**
**CHANDAMAMA INDIA LTD.**
**VADAPALANI, CHENNAI 600 026**

*PLEASE NOTE: The offer closes on May 31, 2000

# चन्दमामा

सम्पुटः - १७ मे - २००० सञ्चिका - २



## अन्तरङ्गम्

**कथाः**


एकशृङ्गिनः राक्षसस्य विवाहः ...... ९
शूरः पतिः ...... १७
अल्पस्य सत्कार्यस्य अपारं फलम् ..... ३१
शरणस्य बुद्धिमत्ता ...... ३९
विचित्रा परीक्षा ...... ४३
योग्यः निर्णयः ...... ५२
सहचारी ज्येष्ठगोपालः ...... ५५

**ज्ञानप्रदधारावाहिनी**
सुवर्णसिंहासनम् - ४ ...... १९

**पौराणिकधारावाहिनी**
महाभारतम् - ५० ...... ४५

**ऐतिहासिकविषयाः**
भारतगौरवगाथा - ३ ...... २६
कावेरीतीरप्रयाणम् - ६ ...... ३५
भारतं - पूर्वम् इदानीं च ...... ६०

**स्थिरशीर्षिकाः**
वार्ताविशेषः ...... ०६
एतन्मासे जाताः महापुरुषाः ...... ०७
भारतावगति-प्रश्नोत्तरम् - ३ ...... ६२
कटाक्षेण प्रपञ्चवीक्षणम् ...... ६४
चित्रशीर्षिकास्पर्धा ...... ६६


## एतस्य अङ्कस्य विशेषाः


एकशृङ्गिनः राक्षसस्य विवाहः (वेतालकथा)


अल्पस्य सत्कार्यस्य अपारं फलम्


सहचारी ज्येष्ठगोपालः

अभिव्यज्यताम् ! पुरस्कारः प्राप्यताम् !!






Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai-600 026 on behalf of Chandamama India Limited, Chandamama Buildings, Vadapalani, Chennai-600 026. Editor : Viswam

# चन्दमामा

## एप्रिल् - २०००



## उत्तराणि

१. गोस्वामी तुलसीदासः, बिल्वमङ्गला च ।

२. अ. बलरामः अभिमन्योः श्वशुरः ।
आ. उग्रसेनः प्रद्युम्नस्य प्रपितामहः ।
इ. घटोत्कचः शिशुपालस्य भागिनेयः ।
ई. परीक्षित् कीचकस्य भ्रातुः पौत्रः ।
उ. कर्णः सुभद्रायाः ज्ञातिः ।

३. १. चरकसंहिता । रचयिता चरकः । सः कनिष्ककाले (प्रथमे शतके) आसीत् ।

२. सुश्रुतसंहिता । रचयिता सुश्रुतः । सः द्वितीये शतके आसीत् ।

३. राजतरङ्गिणी, यस्यां च काश्मीर-राजानां वंशावली वर्णिता अस्ति । रचयिता कल्हणः । द्वादशे शतके सः आसीत् ।

४. अर्थशास्त्रम् । रचयिता कौटिल्यः (चाणक्यः) । सः क्रि.पू. चतुर्थे तृतीये वा शतके आसीत् ।

५. नाट्यशास्त्रम् । रचयिता भरत-मुनिः । सः क्रि.पू. द्वितीये शतके (क्रि.श. प्रथमे शतके वा) आसीत् ।

# सर्जनात्मिकाः स्पर्धाः

## चन्दमामा

**वाचकान् निमन्त्रयति**

अधोनिर्दिष्टेषु क्षेत्रेषु कल्पनां विस्तारयितुं सर्जनात्मकसाहित्यं स्रष्टुं च....





## छायाचित्रस्य
### अनुशीर्षिकास्पर्धा

**१. चित्रशीर्षिकास्पर्धायाः पृष्ठार्थम् –**

केनचित् क्रमेण परस्परं सम्बद्धं चित्रयुगलम् प्रेषयितुम् अर्हन्ति उदीयमानाः चित्रग्राहकाः । चित्रप्रेषणसमये चित्रकारः परस्परसम्बन्धस्पष्टतार्थं स्वस्य आशयम् अवश्यं लिखित्वा प्रेषयेत् ।

**चिताय चित्रयुगलाय**

**रू. ५००/- दीयन्ते पारितोषिकरूपेण**

स्पर्धार्थं चित्रयुगलं यदाकदाचिदपि प्रेषयितुं शक्यम् ।



२. अधोलिखितां लोकोक्तिं सूक्तिं वा अधिकृत्य स्वकीयम् अनुभवं, लघुकथां (नूतनां प्राचीनां वा) प्रेषयितुम् अर्हन्ति भवन्तः । एतदत्र स्मर्तव्यं यत् लोकोक्तिः सूक्तिः वा यां मूलकल्पनाम् आधारीकृत्य प्रवृत्ता, सा न अङ्गीक्रियते । अतः भवदीया कथा ततः अन्या स्यात् ।

एतन्मासीयस्पर्धार्थं लोकोक्तिः –

**'सत्यता एव गरीयसी'**

**चितायै रचनायै रू. ५००/- दीयन्ते पारितोषिकत्वेन**

*रचनां प्रेषयितुम् अन्तिमदिनाङ्कः –*

**३०, मे - २०००**

पुरस्कृता रचना जुलै - २००० सञ्चिकायां प्रकाशयिष्यते ।



संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'

# चन्दमामायाः नवं पदम् .....

अस्ति चन्दमामायाः कश्चन स्वप्नः - 'भारतीयाः बालाः इतिहासं यथास्थितम् अवगत्य प्रेरणां प्राप्य उज्ज्वलस्य भविष्यस्य स्वामिनः स्युः' इति । यदि कश्चित् बालकः इतिहासं साभिमानं स्मरति, भविष्यविषये च स्पष्टकल्पनावान् भवति, तर्हि सः वर्तमानकाले कथं व्यवहर्तव्यम् इति विवेकं प्राप्तवान् भवति एव ।

गते अर्धशतात्मके काले, संस्कृतम् आंग्लं च अविहाय द्वादशभिः भाषाभिः प्रकाश्यमाना भवतां प्रिया चन्दमामा पूर्वोक्तलक्ष्यस्य साधनार्थं कश्चित् प्रयासं कृतवती, केनचित् प्रमाणेन साफल्यं प्राप्तवती अस्ति अपि ! चन्दमामायाः वाचकत्वेन सन्ति लक्षशः बालाः ! इदानीं चन्दमामा नूतने मार्गे पदं स्थापयन्ती अस्ति । 'मिड्-डे' इत्येषा पत्रिका मुम्बयीतः प्रकाश्यते । तया सह हस्तं मेलयित्वा चन्दमामा प्रतिशनिवासरम् अष्टपुटात्मकं 'फन् डे वित् चन्दमामा' इत्येतम् अनुबन्धाङ्कं प्रदास्यति ।

चन्दमामया अन्तर्जाल (Internet) प्रपञ्चे अपि पदं स्थापितम् अस्ति । एषः प्रवेशः असङ्ख्यैः अभिमानिभिः स्वागतीकृतः अस्ति ।

चन्दमामा बालान् शिक्षितान् कर्तुम् इच्छति - न परीक्षाद्वारा, अपि तु उदाहरणद्वारा, न अश्रुपुरस्सरम्, अपि तु स्मयपुरस्सरम् । सा भव्यम् इतिहासं परिचाययति - न नीरसैः पाठैः, अपि तु मनोहरीभिः कथाभिः । एतस्यां दिशि चन्दमामया प्राप्ता सिद्धिः अनल्पा । तथापि वयं न तृप्ताः । इतोऽपि अधिकवृद्धिम् अभिलषामः वयम् । सदा विस्तारं गच्छता अभिमानिगणेन सह अभिप्रायविनिमयं कुर्वन्तः वयं सर्वदा अपि विकासपथे एव स्थातुम् इच्छामः ।

# वार्ताविशेषाः

## हिमालयः द्रवति !

उष्णशक्तिः मानवम् आकाशगामिनम् अकरोत् । सत्यं, सा एव शक्तिः मानवसमूहं नाशयेत् अपि । परिसरे आङ्गाराम्लवाय्वादीनां वृद्धिः औष्ण्यं वर्धयति । तस्य परिणामतः हिमालयः द्रवरूपतां गच्छन् अस्ति । गते



वर्षे सिन्धुनदे प्रवाहौन्नत्यम् अत्यधिकम् आसीत् । तादृशम् इतः पूर्वं कदापि न आसीत् । एतादृशान् अंशान् मनसि निधाय विश्वसंरक्षकसंस्था ज्ञापयति यत् परिसरहानि-निवारणार्थं यदि गम्भीरप्रयत्नाः न क्रियेरन् तर्हि हिमालयोपत्यकाप्रदेशाः सर्वे गच्छता कालेन जलमयाः भवेयुः इति ।

## अपहारकाणां कृते अप्रिया वार्ता !

एषु दिनेषु एकं नूतनं स्क्यानिङ्ग्यन्त्रम् अन्विष्टम् अस्ति । तत् स्यूतादिषु शरीरे वा स्थितानि मादकौषधानि, स्फोटकवस्तूनि इत्यादीनि अपि अभिज्ञातुं शक्नोति । अतः




लोहशोधकेन अपि यत् कर्तुं न शक्यते तत् अपि करोति एतत् साधनम् !

## महादूरसंवेदियन्त्रम्

जन्मना ये बधिराः भवन्ति ते अपि श्रवणसामर्थ्यं प्राप्तुम् अर्हन्ति ! ब्रिटिश्-विज्ञानिनः एषु दिनेषु एकं विनूतनं श्रवणसाधनं




सज्जीकृतवन्तः सन्ति । तत् कर्णयोः अन्तः स्थापयितुं शक्यम् । तत् धृतं चेत् बहिः न दृश्यते । अल्पस्य विद्युत्कोषस्य साहाय्येन एतत् कार्यं करोति । विद्युत्कोषस्य शक्तिः पुनः पुनः जागरयितुं शक्या । इदानीं यत् श्रवणसाधनम् उपलभ्यते ततोऽपि उत्कृष्टम् अस्ति एतत् ।

# A PEEP INTO OUR READERS' MIND

This is the FIFTH issue in your hands since *Chandamama* was re-launched in December 1999. We have no doubt you have enjoyed reading the previous four issues. And you might have noticed that while the magazine has retained the flavour for which it is famous for the last 50+ years, it has undergone a lot of changes in content and upped its layout and design and illustrations – not to speak of the better quality paper. We have tried to make each issue a shade better than the previous one. Of course, the several letters that we received in the last hundred days have proved that the improvements have not gone unnoticed. We do not wish to rest on our oars, but feel that more improvements have to be guided by what our readers want to see included in the magazine, also what they sincerely feel could be dropped for alternative items. Would you not open up your minds for our sake? We would like each one of you to answer the questions given below, cut out the sheet where it is indicated, and mail it to us as quickly as possible. You will see, we have made the exercise very simple. In most cases, you have only to put a tick mark (✓) in the appropriate squares. Here we go!

I. Issues come to me ☐ through subscription
I buy the issues ☐ from the newspaper boy
I buy the issues ☐ from a news stand
I borrow the issues ☐ from a friend/library

II. I also read regularly/occasionally

☐ Comics ☐ Story Books ☐ Other children's magazines.......................................(Identify by name)

III. I read the magazine in English / Telugu / Tamil / Malayalam / Kannada / Hindi / Marathi / Gujarati / Bengali / Assamese/ Oriya / Sanskrit.
*(Underline the language of your choice)*

IV. In the last four months, I read

☐ 4 issues ☐ 3 issues
☐ 2 issues ☐ 1 issue



Cutout on the dotted line

V. I would rate the features as follows :

☐ Serial story ☐ Mythology ☐ Vikram-Vetala tale
☐ Tales from many lands ☐ Other stories
☐ Unsolved mysteries ☐ Saga of India ☐ Biography
☐ Newsflash ☐ India, Then and Now
☐ Discovery of India Quiz ☐ Puzzles / contests
☐ The World Today ☐ Towards Better English
☐ Let us know ☐ Story of Rivers

*(Show your preferences by serially numbering the squares 1 to 16)*

VI. I would like *Chandamama* to include the following features :
*(in the order of priority)*

i.................................... iv....................................
ii. .................................. v.....................................
iii.................................. vi....................................

VII. I would like the cover picture to depict :

☐ a sequence from the adventure serial ☐ a scene from mythology
☐ an action from any other story.

VIII. I feel the price of Rs. 10 for a copy is ☐ too high ☐ affordable
☐ may be reduced *(by using cheaper paper)*

IX. i) I am a subscriber ii) I want to become a subscriber

Name.................................................................. Age ................
Class ................School ...................................................................
Address ...........................................................................................
.......................................................................................................
...................................... PIN........................ State...................

iii) I go to school ☐ by my bike ☐ by school bus ☐ by city bus
☐ by my parent's vehicle

iv) I get pocket money ☐ less than Rs. 100 ☐ more than Rs. 100

*Parent's Signature* *Signature*





# एकशृङ्गिनः राक्षसस्य विवाहः

स च घोरान्धकारमयः मध्यरात्रः । मेघगर्जनं च निरन्तरं श्रूयते । तडित् च विद्योतते तदा तदा । वायुः वेगेन सशब्दं वाति । शृगालरवः पौनःपुन्येन श्रूयते । एवं स्थिते अपि राजा त्रिविक्रमः वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानमार्गम् अनुसृतवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! भवतः विषये मम सन्देहः यत् राजकुमारी सुस्मिता इव भवान् अपि मातापित्रोः कृते किमपि वचनं दत्तवान् स्यात् इति ।



किं तदर्थम् एव अयं भवतः महापरिश्रमः निद्रात्यागश्च ? तथा चेत् अहं चिन्तयामि यत् भवान् अन्तिमे क्षणे सुस्मिता इव फलप्राप्तितः वञ्चितः भवेत् इति । भवतः मार्गायास-परिहारार्थं तस्याः कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं चन्द्रगिरिराज्यं चन्द्रदीपः नाम राजा पालयति स्म । तस्य एकमात्रपुत्री सुस्मिता । राजा तां पुत्रवत् पालितवान् । राजकुमाराय यादृशं शिक्षणं दीयते तादृशम् एव शिक्षणं तस्यै अपि व्यवस्थापितवान् सः । अतः राजकुमारी अश्वचालनं, रथचालनं, खड्गयुद्धं, तरणम् इत्यादिषु सुनिपुणा जाता । मृगयायां तस्याः विशेषरुचिः आसीत् ।

पुत्र्याः एतादृशं व्यवहारं दृष्ट्वा कदाचित् माता उक्तवती - ''एवं व्यवहरन्तीं भवतीं को वा राजकुमारः परिणयेत् ?'' इति ।

तदा सुस्मिता उक्तवती - ''राजकुमारः कोऽपि मां न परिणयति चेत् का हानिः मम ? वस्तुतः राजकुमारः एव कश्चित् मां परिणयेत् इति इच्छा सर्वथा नास्ति मम । मां यः पीरणयति सः एतस्य देशस्य उत्तराधिकारी भवेत् खलु ? अतः तस्मिन् धैर्यं, बुद्धिमत्ता, दया च अवश्यं भवेत्'' इति ।

कदाचित् अपराह्णे सुस्मिता अश्वम् आरुह्य अरण्ये सञ्चरन्ती आसीत् । स च वसन्त-कालः । अरण्यं वर्णमयैः पुष्पैः सुशोभितम् आसीत् । अतः मृगयाविचारं परित्यज्य सुस्मिता एकस्य वृक्षस्य अधः उपविष्टवती । पक्षिणां कलरवं शृण्वती सा प्रकृतिसौन्दर्यस्य दर्शने उद्युक्ता अभवत् ।

वृक्षे बद्धः अश्वः यदा भीत्या हेषारवम् अकरोत् तदा सा मुखं परिवर्त्य दृष्टवती । घोरः व्याघ्रः कश्चन तस्याः समीपम् आगत्य आक्रमणार्थम् उद्युक्तः आसीत् । किं करणीयम् इति यावत् सा चिन्तयन्ती आसीत् तावता व्याघ्रः तस्याः दक्षिणबाहौ व्रणम् अकरोत् एव । बलात् तं निवार्य सुस्मिता धनुः उन्नेतुं प्रयत्नं कृतवती । यावत् तया धनुः न सज्जीकृतं ततः पूर्वम् एव व्याघ्रेण पुनः आक्रमणं कृतम् । सा असहाया जाता । 'अहो मम मरणं निश्चितम्' इति चिन्तयन्त्याः तस्याः कण्ठतः वेदनापूर्णः चीत्कारः श्रुतः ।

किन्तु आश्चर्यं नाम व्याघ्रः तं न अमारयत् । यतः क्षणाभ्यन्तरे कुतश्चित्

आगतः बाणः व्याघ्रे लग्नः सन् तम् अपातयत् । व्याघ्रेण लघुगर्जनमात्रं कर्तुं शक्तं मरणात् पूर्वम् ।

राजकुमारी रक्षणार्थम् आगच्छन्तं धनुर्बाणहस्तं कञ्चित् सुन्दरं तरुणं दृष्टवती । क्षणाभ्यन्तरे मूर्च्छां गतवती च ।

यदा सा सचेतना जाता तदा कस्मिंश्चित् कुटीरे शय्यायां शयिता आसीत् । वातायने अनतिदूरस्थः निर्मलजलयुक्तः जलपातः दृश्यते स्म । तया लक्षितं यत् बाहौ व्रणः वस्त्रपट्टिकया बद्धः इति । बन्धनरीत्या एव ज्ञायते स्म यत् एतत् वैद्यविद्यानिपुणेन एव कृतम् इति । अचिरात् एव सः तरुणः दृष्टिगोचरः जातः, यश्च मूर्च्छाप्राप्तितः पूर्वं दृष्टः आसीत् । औषधं सज्जीकुर्वन् दृष्टः तया ।



''कथम् अस्ति भवती ?'' इति पृष्टं तेन ।

''उल्लाघता दृश्यते । किं व्रणः गम्भीरः अस्ति ?'' इति पृष्टवती सुस्मिता ।

''न तथा गम्भीरः । दैववशात् भवती प्राणापायात् रक्षिता यत्, तत् तु महते सन्तोषाय । मया यत् एतत् औषधं सज्जीक्रियते ततः सप्ताहाभ्यन्तरे स्वस्था भविष्यति भवती'' इति उक्तवान् सः तरुणः ।

वार्तालापतः तस्य परिचयं प्राप्तवती राजकुमारी । तस्य नाम किशोरः इति । बाल्ये एव तदीयः पिता दिवङ्गतः । तस्य पितामहः प्रसिद्धः वैद्यः । सः औषधीयसस्यानां सङ्ग्रहे चिकित्सायां च आधिक्येन समयं यापयति स्म । भूसम्पत्त्यादिरक्षणे विशेषावधानं न आसीत् तस्य । अतः दायादाः वञ्चनया तदीयां समग्रां सम्पत्तिं स्वायत्तीकृतवन्तः । अतः सः ग्रामं परित्यज्य पौत्रेण सह अरण्ये वासम् आरब्धवान् । सः अरण्यवासिनां चिकित्साम् आरब्धवान् । तस्य सेवाभावं दृष्ट्वा आकृष्टाः अरण्यवासिनः तं चिकित्सकं संरक्षकं च भावितवन्तः । तं देवम् इव ते पूजयन्ति स्म । किशोरः पितामहात् चिकित्साक्रमम् औषधनिर्माणं च ज्ञातवान् । पितामहस्य दिवङ्गतेः अनन्तरं सः परम्पराप्राप्तां चिकित्सावृत्तिम् एव अनुवर्तितवान् । व्रणितान् पशून् पक्षिणः चापि चिकित्सया स्वस्थान् कुर्वन् सः स्वसेवाक्षेत्रं विस्तारितवान् ।

राजकुमार्यै औषधं यच्छन् किशोरः अपृच्छत् - ''तरुणी भवती किमर्थम् एवं पुरुषवेषेण एकाकिनी अपायकरे मार्गे



अटति ?'' इति ।

''अहम् उद्योगान्वेषणार्थं नगरं गच्छन्ती आसम् । निर्मले सुन्दरे परिसरे प्रयाणं मह्यं विशेषतः रोचते । अतः एकाकितया प्रस्थितं मया । किन्तु एवम् आकस्मिकः अपायः सम्भवेत् इति मया न निरीक्षितम् आसीत् । दैवात् मया भवत्तः रक्षणं प्राप्तम् । आजीवनं भवतः उपकारं स्मरिष्यामि अहम्'' इति अवदत् सुस्मिता ।

अग्रिमचिकित्सार्थम् औषधं दत्त्वा अश्वस्य आरोहणार्थं साहाय्यं कृत्वा - ''मन्दं प्रयाणं क्रियते चेदपि भवती सायङ्कालाभ्यन्तरे राजधानीं प्राप्नुयात्'' इति अवदत् किशोरः ।

प्रासादम् आगता सुस्मिता चिन्तितवती - 'एषः किशोरः तरुणः, धीरः, बुद्धिमान्, सेवसक्तः च अस्ति । राजकुमारेषु ये गुणाः न स्युः ते सर्वे एतस्मिन् सन्ति । एषः एव मया कुतो वा न परिणेतव्यः ?' इति ।

'एतस्य विषये मया इतोऽप्याधिकविषय-सङ्ग्रहः करणीयः' इति सा सङ्कल्पितवती । एतदवसरे सा ग्रामीणकन्यायाः वेषं धृत्वा अरण्यं प्रविष्टवती । अरण्यसमीपस्य एव कस्यचित् तक्षकस्य गृहस्य परिसरे अश्वं त्यक्त्वा पादाभ्याम् एव अग्रे गतवती सा । जलपातपरिसरः यावत् तया प्राप्तः तावता कश्चन विकटाट्टहासः श्रुतः । एकशृङ्गी कश्चन राक्षसः तस्याः समीपम् आगत्य तां गृहीत्वा अवदत् - ''योग्या वधूः प्राप्ता मया । सा सुन्दरी अपि अस्ति !'' इति ।

सः तां पर्वतशिखरस्थं स्वगृहं नीत्वा प्रकोष्ठे स्थापयित्वा प्रकोष्ठं कीलितवान् ।

किञ्चित्कालं शान्ततया चिन्तनात् 'किम् एतत् प्रवर्तमानम् अस्ति' इति अवगतवती राजकुमारी चिन्तितवती - 'एषः एकशृङ्गी राक्षसः दृढः बलवान् च अस्ति । बलेन एषः जेतुं न शक्यः । युक्त्या एव जेतव्यः' इति ।

''अये सुन्दरि, अलं भीत्या । अत्र क्षीरं फलानि च सन्ति । तानि सेवताम् । अहं भवतीं खादितुं न इच्छामि, प्रत्युत भवतीं परिणेतुम् इच्छामि । अचिरात् एव प्राप्यमाणं कमपि मुहूर्तं जानाति वा भवती ?'' इति अपृच्छत् सः एकशृङ्गी राक्षसः ।

''वीरवर ! अहं कञ्चित् बलवन्तं राक्षसम् एव परिणेतुम् इच्छामि इति भवता कथं ज्ञातम् ? आश्चर्यं नाम यथा अहं भवादृशं परिणेतुम् इच्छामि तथैव भवान् अपि मादृशीं

परिणेतुम् इच्छति ! अहो सौभाग्यम् ! किन्तु अत्र भवतः एकशृङ्गित्वम् एव विघ्नायते !'' इति उक्तवती सुस्मिता ।



''किं मम शृङ्गम् अपनेतव्यम् इति भवती चिन्तयति ? धिक् भवतीम् । यदि शृङ्गं न भवेत् तर्हि अहं शक्तिहीनः स्याम् इति किं भवती न जानाति ? शृङ्गम् एव मम शक्ति-मूलम्'' इति कोपेन अवदत् राक्षसः ।

तदा सुस्मिता उक्तवती – ''सुन्दराङ्ग ! कानिचन अङ्गानि युगलरूपेण एव भवेयुः । यथा कर्ण-पाद-शृङ्ग-नेत्रादयः । मम जातकं दृष्ट्वा कश्चन ज्योतिषिकः उक्तवान् यत् एक-शृङ्गी यदि मां परिणयेत् तर्हि सः मरणं प्राप्नुयात् इति । अतः एव मया उक्तम् – एकशृङ्गित्वं विघ्नायते इति'' इति ।

''एवं चेत् मया अनन्यगतिकतया भवती खादनीया भवेत् । वस्तुतः तु अहं भवतीं परिणेतुम् इच्छामि'' इति अवदत् राक्षसः ।

''एतावता एव निराशा न प्राप्तव्या । शृङ्गयुगलधारणात् समस्या परिहर्तुं शक्या खलु ?'' इति अपृच्छत् सुस्मिता ।

''वस्तुतः मम पितुः शृङ्गद्वयं मत्समीपे अस्ति । किन्तु किं तेन ?''

''तयोः एकतरत् शिरसि योजयितुं शक्येत खलु ? किं भवान् किशोरनामकं वैद्यं जानाति ?''

''तस्य नाम केन वा न श्रुतम् ? किं सः मां शृङ्गयुगलवन्तं कुर्यात् ?''

''निश्चयेन । सः समर्थः शास्त्रचिकित्सा-परिणतः वैद्यः । सः प्रार्थितः चेत् इष्टं सिद्ध्येत् एव'' इति उक्तवती सुस्मिता ।

''अस्तु । तम् एव अत्र आनेष्यामि'' इति उक्त्वा दुर्गं कीलयित्वा ततः निर्गतवान् सः राक्षसः । सुस्मिता दुर्गे सर्वत्र अटितवती । तया तत्र सुवर्णराशिः एव दृष्टः । 'प्रायः लुण्ठनात् सम्पादितं स्यात् एतत्सर्वम्' इति निर्णीतवती सा ।

अचिरात् एव किशोरेण सह आगतवान् राक्षसः ।

''वैद्यवर्य ! मम एतं प्रियकरं शृङ्ग-युगलोपेतं करोतु कृपया'' इति प्रार्थितवती राजकुमारी ।

किशोरः तां प्रश्नार्थकदृष्ट्या दृष्टवान् । तावता पितुः शृङ्गयुगलम् आनीय किशोरस्य पुरतः स्थापितवान् राक्षसः ।

''यदि शृङ्गयुगलं योजनीयं तर्हि आदौ



विद्यमानं शृङ्गम् अपनेतव्यम् । यतः तत् मध्ये अस्ति । शृङ्गयुगलं तु शिरसः वामदक्षिण-पार्श्वयोः खलु भवेत् ?'' इति उक्तवान् किशोरः ।

''विद्यमानम् अपनीतं चेत् अहं शक्तिहीनः खलु भवेयम् ?'' इति आतङ्केन उक्तवान् राक्षसः ।

''विद्यमानम् अपनीय शृङ्गद्वयं नूतनतया योज्यते चेत् भवान् यथापूर्वं शक्तिमान् स्यात् एव'' इति उक्तवती सुस्मिता ।

''तथा चेत् भवतु'' इति उक्तवान् राक्षसः ।

किशोरः राक्षसं शय्यायां शाययित्वा किमपि औषधं पाययित्वा तं संज्ञाहीनं कृत्वा शस्त्रचिकित्सया तदीयं शृङ्गम् अपनीतवान् ।

''अलम् एतावता एव । इदानीम् एषः शक्तिहीनः जातः अस्ति । एवम् एव तिष्ठतु सः'' इति उक्तवती सुस्मिता ।

किन्तु किशोरः तस्याः वचनम् अश्रुतवान् इव व्यवहरन् स्वकार्यम् अनुवर्तितवान् । राजकुमारी पुनरपि तदेव उक्तवती । तथापि किशोरः शृङ्गयुगलस्य योजने उद्युक्तः आसीत् । अतः राजकुमारी तस्य अवधानम् आकर्षन्ती पृष्टवती – ''किं भवान् मां न अभिज्ञातवान् ?'' इति ।

''व्याघ्रस्य आक्रमणेन व्रणिता भवती एव आसीत् खलु ? विलक्षणव्यवहारः भवत्याः ! किं भवती एतं राक्षसं परिणेतुम् इच्छति ?'' इति आश्चर्येण पृष्टवान् किशोरः ।

''एतम् आरण्यकं का वा परिणयेत् ? कालयापनार्थं मया विवाहप्रस्तावः उप-स्थापितः आसीत् । एषः शक्तिहीनः भवेत् इत्येव मम इच्छा । अतः शृङ्गयुगलयोजनं मास्तु सर्वथा'' इति उक्तवती सुस्मिता ।

''अहं भवतीम् अवगच्छामि । भवती अपि माम् अवगच्छेत् इति मम अपेक्षा । अहं कश्चन वैद्यः । चिकित्सया जीविनां शक्तेः वर्धनं मम धर्मः, न तु शक्तेः अपाकरणम् । व्याघ्रस्य चिकित्सासमये मया किं तस्य दंष्ट्रे अपनेतव्ये ? न खलु ? यस्य चिकित्सा मया क्रियते सः मयि यं विश्वासं स्थापयति तस्य रक्षणं मम धर्मः । अतः शृङ्गयुगलं मया योज्यते एव । किन्तु एषः राक्षसः भवतीं यथा न पीडयेत् तथा व्यवस्थाम् अपि अहं करिष्यामि'' इति अवदत् किशोरः ।

शस्त्रचिकित्सानन्तरं राक्षसः सचेतनः

जातः । "किम् इदानीम् अहं शृङ्गयुगलवान् जातः अस्मि ?" इति अपृच्छत् राक्षसः ।

"आं, हस्ताभ्यां स्पृष्ट्वा भवान् तत् स्वयम् ज्ञातुम् अर्हति" इति अवदत् किशोरः ।

"नितराम् उपकृतः अस्मि । प्रत्युपकार-रूपेण अहं भवते सुवर्णकण्डोलं दास्यामि" इति कृतज्ञताभावेन अवदत् राक्षसः ।

"तादृशं किमपि न आवश्यकम् । यदि साहाय्यं करणीयम् एव इति प्रबला इच्छा भवतः, तर्हि मम प्रार्थना अङ्गीकरणीया भवता । एतां परित्यजतु कृपया । एतस्याः विवाहविचारः अपि परित्यक्तव्यः भवता" इति अवदत् किशोरः ।

"विवाहविचारः मया परित्यक्तः एव । अस्माकं राक्षसकुले एकशृङ्गी अहम् एकः एव आसम् । अतः सर्वे माम् उपहसन्ति स्म । अतः एव मया गृहं परित्यज्य अत्र एकाकितया वासः क्रियते स्म । राक्षस-कुलाधिपस्य पुत्री लवङ्गी मां परिणेतुम् इच्छति स्म । किन्तु मम एकशृङ्गित्वं दृष्ट्वा तस्याः पिता मह्यं तस्याः दानं निराकृतवान् । इदानीं तु अहं शृङ्गयुगलवान् अस्मि । अतः लवङ्गी-परिणये स्थितः विघ्नः परिहृतः । तदर्थम् एषोऽहं मम वासस्थानं प्रतिगच्छामि । एतत् दुर्गम्, अत्रत्यः सुवर्णराशिश्च भवतः एव" इति उक्त्वा सन्तोषेण गायन् नृत्यन् च राक्षसः ततः निर्गतवान् ।

"किशोरवर्य ! एतस्मिन् दुर्गे एव भवान् वसतु । चिकित्सादिनिमित्तं सुवर्णराशेः उपयोगः भवतु । कांश्चन योग्यान् तरुणान् शिष्यत्वेन सज्जीकृत्य चिकित्साव्यवस्थां



भवान् विस्तारयतु । भवान् द्वितीयवारं मां रक्षितवान् । अतः अहं नितरां कृतज्ञा अस्मि । यदि कोऽपि क्लेशः स्यात् तर्हि साक्षात् राजप्रासादम् आगत्य – 'अहं सुस्मितां द्रष्टुम् इच्छामि' इति वदतु । ततः भवतः समस्या परिहृता भविष्यति । सा सुस्मिता अहम् एव" इति उक्त्वा सुस्मिता ततः निर्गतवती ।

वेतालः एवं कथां समाप्य अवदत् – "अये राजन् ! किं सुस्मितायाः व्यवहारः उचितः ? किशोरस्य गुणविशेषान् ज्ञातुं खलु सा द्वितीयवारम् अरण्यम् आगतवती ? गुण-विशेषकारणतः एव सा तं परिणेतुम् इच्छति स्म । किशोरस्य गुणाढ्यता यदा ज्ञाता तदा सा किमर्थं परिणयविचारं परित्यक्तवती ? विलक्षणः इव खलु भासते तस्याः



**यथा आतपः मेघान् इतस्ततः विकीर्णान् करोति तथा मन्दहासः कष्टानि लीलया निवारयति ।**

**– श्रीमाता**

व्यवहारः ? मम एतेषां सन्देहानां समाधानं ज्ञात्वा अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्त्रधा भग्नं भवेत्'' इति ।

तदा तूष्णीं स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''राजकुमारी सुस्मिता स्वयं गुणवती गुणग्राहिणी च । मानवानां पशूनां च चिकित्सार्थम् आत्मानं समर्पितवान् आसीत् किशोरः । तदेव तस्य वैशिष्ट्यम् । केनचित् अपि कारणेन वृत्तिधर्मं परित्यक्तुं न इच्छति स्म सः । एतादृशाः वैद्याः विरलाः एव खलु लोके ? यदि सः राजकुमारीं परिणयेत् तर्हि तेन राजधान्यां वासः करणीयः भवेत् । तदा अरण्यवासिनः असहायाः भवेयुः । अन्यच्च राजकुमारीं परिणीतवान् एव भावी राजा अपि स्यात् खलु ? यतः चन्द्रदीपस्य अद्वितीयपुत्री सुस्मिता । एवं किशोरः राजा यदि भवेत् तर्हि तेन शासनव्यवहारे अवधानं यच्छता चिकित्सावृत्तिः एव परित्यक्तव्या भवेत् । एतत् समाजस्य अहिताय । अन्यच्च समर्थः वैद्यः समर्थः शासकः अपि भवेत् इत्यत्र नास्ति निश्चयः । राजकुमारी स्वार्थपरायणा न । सा समाजहितम् एव मुख्यं परिगणयति । येषां विषये कोऽपि अवधानं न ददाति तेषां सेवा एव श्रेष्ठा इति मत्वा सा किशोरस्य परिणयेच्छां परित्यक्तवती । 'किशोरः स्वसामर्थ्यं, चिकित्साव्यवस्थां चापि वर्धयित्वा, अन्यान् अपि सज्जीकृत्य लोकसेवां करोतु । अन्ये अपि ततः प्रेरिताः भवेयुः' इति तस्याः चिन्तनम् आसीत् । एवं तस्याः व्यवहारे न काऽपि विलक्षणता'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।





# शूरः पतिः

नारायणः यदा सम्पूर्णां परिणीतवान् तदा ग्रामीणाः सर्वे चिन्तितवन्तः यत् एतौ अनुकरणयोग्यं जीवनं करिष्यतः इति । किन्तु तैः यथा चिन्तितं तथा न प्रवृतम् । दिनेषु गतेषु नारायणः दुरभ्यासानां दासः जातः । तस्य स्वास्थ्यं विनष्टम् । आर्थिकी स्थितिः अपि विषमतां गता । लघुना अपि निमित्तेन कुपितः भवति स्म सः ।

एतत्सर्वं दृष्ट्वा हितचिन्तकाः नारायणं बोधितवन्तः – ''दुरभ्यासं त्यजतु । पत्न्याः ताडनं भर्त्सनं न अनुचितम् । एतादृशः व्यवहारः पुत्रेषु दुष्परिणामं जनयति । एतत् सर्वथा पतनकारणम्'' इति ।

एतत् श्रुत्वा नारायणः कोपेन – ''अहं मम पत्नीं भर्त्सयेयं, ताडयेयं, मारयेयं वा । किं तेन भवताम् ? हिताहितविषये भवतां बोधनं सर्वथा न आवश्यकं मम'' इति उक्तवान् । हितचिन्तकाः निरुत्तराः जाताः ।

एकदा सम्पूर्णा वस्त्रक्षालनार्थं कासारं गतवती आसीत् । तत्र रुक्मिणी मिलिता । सा परोपकारशीला, विवेकिनी, गार्हस्थ्यसमस्यानां परिहारे सिद्धहस्ता च । सम्पूर्णा तां स्वसमस्यां निवेदितवती ।

तत् श्रुत्वा रुक्मिणी अवदत् – ''भवत्याः पत्युः व्यवहारविषये अन्येषां मुखतः अपि मया बहुधा श्रुतम् । पत्युः ताडनप्रवृत्तिः निवारणीया चेत् भवत्या किञ्चित् साहसं करणीयम् । तत् भवत्याः स्वभावविरुद्धं स्यात् कदाचित् । तथापि अनिवार्यं तत् । पातिव्रत्यं प्रमुखं भावयन्ती भवती सर्वम् अपि मौनेन सहेत चेत् आजीवनं रोदनं करणीयं भवेत्'' इति ।

एतावत् उक्त्वा रुक्मिणी सूचितवती यत् सम्पूर्णया किं करणीयम् इति । रुक्मिण्याः वचनं श्रुत्वा भीतिमिश्रितेन स्वरेण उक्तवती सम्पूर्णा – ''भगिनि ! भवत्याः कथनं युक्तं स्यात्, तथापि मम तु भाति यत् एतत् कर्तुं मया सर्वथा न शक्यते इति । एतस्मात् अपि मातृगृहं प्रति गमनम् एव वरं स्यात्'' इति ।

''अविवेकिनि ! धिक् भवतीम् ! सर्वदा शाश्वतपरिहारः चिन्तनीयः, न तु तात्कालिकः । भवत्याः मातृगृहस्य स्थितिं

किम् अहं न जानामि ? मातापितृभ्यां विहीनं तत् । भ्राता तत्पत्नी च इदानीं तत्र सुखेन स्तः । किं तत्र गत्वा तयोः निश्चिन्तता नाश्यते ? तयोः भारं वर्धयितुम् इच्छति भवती ? तथा कदापि न करणीयं भवत्या'' इति उक्त्वा वस्तुस्थितिम् अवगमय्य सम्पूर्णायां धैर्यं पूरितवती रुक्मिणी । एतस्मात् रुक्मिण्याः वचनस्य अनुगुणं व्यवहर्तुं सन्नद्धा अभवत् सम्पूर्णा ।

रात्रौ नारायणः पानमत्तः सन् विलम्बेन गृहं प्रविश्य - ''अये वराकि ! क्व गता भवती ? मया बहुवारम् आहूतम् । तथापि भवती सुखेन शेते ! खादनं सुखेन शयनं च विना किम् अन्यत् कार्यं भवत्याः ? ....'' इति उच्चैः तर्जनम् आरब्धवान् ।

तथापि सम्पूर्णा उत्थाय न आगता । ततः नारायणस्य कोपः नितरां प्रवृद्धः । सः कोणस्थम् एकं दण्डं गृहीत्वा क्रोधेन शयनप्रकोष्ठं प्रविष्टवान् ।

अत्रान्तरे चण्डरूपं प्राप्तवती सम्पूर्णा - ''मया पुनः पुनः बोध्यमानः अपि भवान् अद्यापि सुरां पीत्वा आगतः ? मम सहना अद्य समाप्ता । स्वयं पापगर्ते पतन् भवान् परिवारसुखं नाशयित्वा बालानां भविष्यम् अपि नाशयन् अस्ति । अद्य एषाऽहं भवतः दुष्प्रवृत्तिं दूरीकरिष्यामि'' इति वदन्ती नारायणस्य हस्ते स्थितं दण्डं बलात् आकृष्य तेनैव तं प्रहर्तुम् उद्युक्ता अभवत् ।

नारायणः द्वित्रान् प्रहारान् प्राप्य मञ्चस्य अधः गत्वा उपविष्टवान् । तथापि सम्पूर्णा तं प्रहृतवती । ''अद्य आरभ्य दुष्टानां सहवासः न क्रियते, सुरा च न पीयते इति प्रतिज्ञा क्रियते चेत् एव ताडनेभ्यः मुक्तिः स्यात्, न अन्यथा'' इति उक्तवती सा ।

''अये चण्डि ! एषोऽहं करौ योजयित्वा प्रार्थये । शपथं च करिष्यामि यत् इतः परं सुरां न पास्यामि, भवतीं पुत्रान् वा न पीडयिष्यामि इति । अतः प्रहारं स्थगयतु कृपया । हाँ, मञ्चस्य अधोभागात् बहिः आगन्तव्यं वा न वा इति निर्णयः ममैव । यतः अहम् अस्मि भवत्याः शूरः पतिः'' इति उक्तवान् नारायणः ।

तदा सम्पूर्णा प्रहरणं स्थगयित्वा हसन्ती - ''वीरवर ! मञ्चस्य अधोभागात् बहिः आगच्छतः भवतः स्वागतं वदामि । वस्तुतः भवान् शूरः एव । यतः शूरात् अन्यः सुरापिशाचीतः आत्मनः विमोचनं साधयितुं न अर्हति'' इति उक्तवती ।





# सुवर्णसिंहासनम्-४

*(अध्ययनसमाप्तितः पूर्वम् एव कौण्डिन्यराजः श्रीदत्तः पुत्रं विजयदत्तं गुरुकुलात् आनायितवान् । 'मरालभूपतिः अन्यराजान् वशीकृत्य कौण्डिन्यदेशं स्वायत्तीकर्तुं कथं कुतन्त्रं रचितवान् अस्ति' इत्येतत् पुत्रं विस्तरेण उक्तवान् श्रीदत्तः । बन्धुः कालिन्दीराजः माधवसेनः अपि कुतन्त्रस्य सहभागी अस्ति इति ज्ञात्वा विजयदत्तः आश्चर्यचकितः । अत्रान्तरे श्रीलेखा पुरुषवेषेण कौण्डिन्यदेशं प्राप्तवती । श्रीदत्तः विजयदत्तस्य श्रीलेखायाः च विवाहं गान्धर्वविधिना निर्वर्तितवान् । राजगुरोः आदेशस्य अनुगुणं पूर्वदिशि खननम् आरब्धम् । गर्ते उष्णं श्वासं विमुञ्चन् कश्चन घोरः सर्पः प्रत्यक्षः जातः । राजगुरुः विजयदत्तं सूचितवान् यत् आदौ मन्त्रप्रयोगेण सर्पं शान्तं कर्तुं प्रयत्नं करवाम, तत् सफलं न जातं चेत् भवता शौर्येण सः सम्मुखीकरणीयः भवेत् इति । तदनन्तरम् .....)*

राजगुरोः शिवानन्दस्य वचनस्य श्रवणस्य समनन्तरम् एव विजयदत्तस्य हस्तः अप्रयत्नेन खड्गम् अगृह्णात् ।

अनन्तरं शिवानन्दवर्यः हस्ते अभिमन्त्रितं जलं गृहीत्वा मन्त्रं पठन् सर्पस्य समीपं गतवान् । मन्त्रजलं सम्प्रोक्षितवान् च । श्रीदत्तः विजयदत्तः च श्वासोच्छ्वासकार्यम् अपि विस्मृत्य एतत् दृश्यं कुतूहलेन पश्यन्तौ आस्ताम् ।

शिवानन्दवर्यः चिन्तितवान् आसीत् यत् मन्त्रप्रभावतः सर्पः अदृश्यतां गच्छेत् इति । किन्तु तथा न जातम् । तथापि तापकरस्य श्वासस्य निस्सारणं तु स्थगितम् । शिवानन्दवर्यः पुनरपि यदा मन्त्रं पठितुम् उद्युक्तः तदा सर्पस्य मुखात् वचनं निर्गतम् - "आर्य ! मन्त्रज्ञ ! मन्त्राः मद्विषये अकिञ्चित्कराः । महतः उद्देशस्य साधनार्थं महता मन्त्रवादिना अहं सृष्टः । मम प्रश्नानां समुचितम् उत्तरं यः दास्यति तस्य वशः भविष्यामि अहम्" इति ।

सर्पस्य वचनं श्रुत्वा श्रीदत्त-विजयदत्तौ परस्परं मुखं दृष्टवन्तौ । शिवानन्दवर्यः विजयदत्तसमीपम् आगत्य अवदत् - "वत्स ! सर्पराजस्य सम्मुखीकरणं भवतः कार्यम् इदानीम् । धैर्येण अग्रे गत्वा सर्पेण पृष्टस्य



उत्तरं ददातु'' इति ।

विजयदत्तः पितुः राजगुरोः च आशीर्वादं प्राप्य शान्तमुद्रया गाम्भीर्येण च सर्पस्य समीपं गतवान् । सर्पराजं प्रणम्य अवदत् च – ''सर्पराज ! एषोऽहं भवतः प्रश्नानाम् उत्तरं वक्तुं सिद्धः अस्मि । प्रश्नान् पृच्छतु तावत्'' इति ।

तदा सर्पः अवदत् – ''हे वीरयुवक ! मम कथनम् आदौ श्रद्धया शृणोतु । यः मम प्रश्नानां समुचितम् उत्तरं ददाति तस्य कण्ठं मालारूपेण अलङ्करिष्यामि अहम् । उत्तर-दानार्थम् आगतः यः तत्र असमर्थः भवति तं यमलोकं प्रेषयिष्यामि । प्रश्नकारणतः पूर्वं नियमस्य कथनं मम धर्मः इत्यतः अहं भवन्तम् एतत् उक्तवान् । एतत् ज्ञात्वा अपि यदि भवान् उत्तरं दातुं सिद्धः तर्हि प्रश्नं पृच्छामि । अन्यथा प्रतिगन्तुम् अर्हति भवान्'' इति ।

सर्पराजस्य वचनं श्रुत्वा श्रीदत्तः नितरां भीतः । किमपि वक्तुम् इच्छन् सः विजयदत्त-समीपं गन्तुम् उद्युक्तः । तस्य गमनं निवारयन् अवदत् शिवानन्दः – ''भवता भीतेन भवितव्यं नास्ति । युवराजस्य योग्यतायां दृढविश्वासः भवतु'' इति ।

विजयदत्तः तु किञ्चिदपि न भीतः । सः आत्मविश्वासेन सर्पराजम् अवदत् – ''भवतः नियमः अङ्गीक्रियते मया । प्रश्नं पृच्छतु तावत्'' इति ।

''श्रेष्ठेन राज्ञा पालनीयाः त्रयः धर्माः के ?'' इति अपृच्छत् सर्पः ।

क्षणकालं विचिन्त्य अवदत् विजयदत्तः – ''श्रेष्ठः राजा सदापि त्रिकरणशुद्ध्या त्रीन् अंशान् पालयेत् । ते च – सत्यं, धर्मः, न्यायः च'' इति ।

''साधु राजकुमार ! भवान् विजयी जातः । इतः परम् अहं भवतः कण्ठे विजय-मालारूपेण स्थास्यामि । यावत् भवत्कण्ठे अहं स्थास्यामि तावत् अतिप्रबलम् अपि विषं भवति कमपि परिणामं जनयितुं न अर्हति । अन्यच्च इतोऽपि पादत्रयं यावत् खननेन एकं दिव्यम् उपायनं प्राप्यते भवता'' इति उक्त्वा – ''विजयी भव !'' इति आशीर्वादं कृत्वा ततः अदृश्यः अभवत् । श्वेतानि मौक्तिकानि विकिरन् मालारूपं प्राप्य विजयदत्तस्य कण्ठे अतिष्ठत् च ।

पुनरपि खननम् अनुवृत्तम् । सायङ्काल-समये भटैः धातुनिर्मितस्य वस्तुनः स्थितिः

अभिज्ञाता । ते जागरूकतया मृत्तिकाम् अपसारितवन्तः । तावता अन्धकारः प्रसृतः । राजगुरुः आज्ञापितवान् यत् दीपप्रकाशे कार्यम् अनुवर्तताम् इति । भटाः तथैव कृतवन्तः ।



प्रातःकाले सूर्योदयसमये ते एकम् आश्चर्यकरं दृश्यं दृष्टवन्तः । तेषां पुरतः चक्रवर्तियोग्यं, शक्ति-प्रतिष्ठा-वैभव-सङ्केतभूतम् एकं विशालं सुवर्णसिंहासनं स्थितम् आसीत् ।

सिंहासनस्य शिरोभागे हैहयवंशस्य कुल-देवतायाः देव्याः गायत्र्याः प्रतिमा स्थिता आसीत् । देव्याः आसनत्वेन एकं विशालं कमलं दृश्यते स्म । कमलस्य केन्द्रभागे एकं माणिक्यं योजितं दृश्यते स्म ।

देव्याः किरीटे मुकुटमणित्वेन स्थितं वज्रं तु श्वेतकिरणान् सर्वत्र प्रसारयति स्म । सिंहासनम् उभयतः द्वौ सिंहौ आस्ताम् । तयोः मुखं पिहितम् आसीत् । किन्तु नेत्रे क्षात्रतेजः निस्सारयती अग्निगोले इव प्रकाशमाने द्रष्टॄणां हृदयेषु भीतिं जनयतः स्म ।

तस्य सिंहासनस्य त्रीणि सोपानानि आसन् । प्रतिसोपानम् उभयतः स्वर्णमय्यः नारीप्रतिमाः स्वागतभङ्ग्या स्थिताः आसन् । तासां प्रतिमानां सौन्दर्यम् अनुपमम् आसीत् । तासां शिल्पसौन्दर्यम् अपि अपूर्वम् एव आसीत् ।

सिंहासनस्य सौन्दर्यं दृष्ट्वा आश्चर्यम् आनन्दं च अनुभवन् श्रीदत्तः कुलदेवीप्रतिमां कर-योजनपूर्वकं प्रणम्य – ''अम्ब ! भवत्याः दासानुदासाः वयम् । कुलदीपकस्य विजय-दत्तस्य पट्टाभिषेकः एतस्मिन् एव सिंहासने यथा प्रचलेत् तथा अनुग्रहं करोतु कृपया । भवत्याः कृपाकटाक्षः अस्मासु सदा भवतु'' इति प्रार्थितवान् ।

विजयदत्तः श्रीलेखा चापि कुलदेवीं नमस्कृतवन्तौ । राजा श्रीदत्तः अधिकारिणः आदिष्टवान् यत् एतत् स्वर्णसिंहासनं जागरूकतया राजभवनं प्रति नेतव्यम् इति । ततः ते सर्वे राजभवनं प्रतिगतवन्तः ।

राजभवने शिलीमुखः नाम गुप्तचरः महाराजस्य प्रतीक्षां कुर्वन् आसीत् । सः शत्रूणां सद्योव्यवहारं निवेदयन् अवदत् – ''मरालभूपतिः अल्पेन सैन्येन सह गत्वा कालिन्दीराज्यस्य अतिथिगृहे वासं करोति स्म । पुत्रस्य चक्रभूपतेः राजकुमार्याः



ज्येष्ठशुक्लपञ्चम्याः रात्रौ कालिन्दीतः प्रस्थाय कालिन्दीनदीतीरे शिबिरं स्थापयिष्यतः । रात्रौ एव अस्मद्देशम् आक्रमितुं यत्नं करिष्यतः च'' इति ।

गुप्तचरस्य वचनं श्रुत्वा श्रीदत्तः पुत्रं पश्यन् अवदत् - ''विजय ! भवतः श्वशुरः इदानीम् अपि शत्रुपक्षस्यैव समर्थकः इव भासते । कपोतद्वारा यः सन्देशः प्रेषितः सः अस्मान् भ्रमगर्ते पातयितुं स्यात्'' इति ।

तदा विजयदत्तः अवदत् - ''शत्रु-सहवासात् मुक्तिं प्राप्तुम् अशक्नुवन् सः तेषां पक्षं समर्थयन् इव व्यवहरन् अपि स्यात् खलु ? उभयथा अपि सम्भावना अस्ति एव'' इति ।

''आं, साऽपि सम्भावना अस्ति एव । सङ्कटकाले शत्रुणा सह मित्रवत् व्यवहारः अपि राजनीतेः एकम् अङ्गम् । यदि सः शत्रुपक्षीयः एव इदानीम् अपि स्यात् तर्हि कपोतद्वारा अपरं सन्देशं प्रेषितवान् स्यात् । तथापि, वस्तुस्थितिः का इति भगवान् एव जानाति । युद्धार्थम् अस्मत्सैन्यस्य सज्जीकरणं तु अस्माकं कर्तव्यम् । जय-पराजययोः निर्णेता भगवान् । अस्मद्रक्षणभारम् अपि तस्मिन् एव आरोप्य वयं कर्तव्यपराः स्याम'' इति उक्तवान् श्रीदत्तः ।

किञ्चित्कालं विचिन्त्य सः राजगुरुं शिवानन्दवर्यम् अवदत् - ''गुरुवर्य ! गुप्तचरेण यत् उक्तं तत् भवता अपि श्रुतं स्यात् एव । अस्माकं स्थितिः इदानीं चिन्ताकरी अस्ति । शत्रुभिः आवृताः स्मः वयम् । आक्रमणं यदाकदाचित् अपि

श्रीलेखायाः च विवाहः निर्वर्तनीयः इति तस्य रहस्येच्छा । अकस्मात् पितापुत्राभ्यां ज्ञातं यत् राजकुमारी श्रीलेखा पुरुषवेषं धृत्वा पलायितवती इति । सा अस्मद्राज्यम् एव आगता अस्ति इति तौ भावयतः । कालिन्दीराजः अपि तथैव चिन्तयति ।

एतदनन्तरम् अपि मरालभूपतिः कालिन्दी-राजाय सन्देशं प्रेषितवान् - 'गतं तु गतम् एव । तद्विषये विशेषचिन्तनं न करणीयम् । पूर्वयोजनानुगुणं निश्चिते दिने कौण्डिन्यस्य आक्रमणार्थं प्रयासः करणीयः' इति । कालिन्दीराजेन अत्र सहमतिः दर्शिता ।

चम्पककुन्ददेशयोः सेना आक्रमणोद्देशेन अस्मद्देशं लक्ष्यीकृत्य प्रस्थिता स्यात् एतावता । कालिन्दीराजः मरालभूपतिः च

सम्भाव्यते । सुवर्णसिंहासनं दृष्ट्वा अहं चिन्तितवान् आसं यत् मत्पुत्रसदृशः भाग्यशाली अन्यः कोऽपि न स्यात् इति । किन्तु इदानीं परिस्थितिः सर्वथा अननुकूला दृश्यते ...'' इति ।

तदा गुप्तचरप्रमुखः शिलीमुखः पुनः अवदत् - ''महाराज ! अन्यदपि किञ्चित् निवेदनीयम् अस्ति मया । अन्येन गुप्तचरेण अन्या वार्ता आनीता अस्ति । विवाहनिश्चयार्थं चक्रभूपतिं स्वभवनं प्रति निमन्त्रितवान् माधवसेनः एतां वार्तां पत्नीं न निवेदितवान् आसीत् । चक्रभूपति-श्रीलेखयोः विवाहः सर्वथा अप्रियः आसीत् महाराज्ञ्याः । माधवसेनस्य व्यवहारस्य आन्तर्यं कथमपि ज्ञातम् आसीत् तया । तस्याः साहाय्यात् एव राजकुमारी राजभवनात् निर्गन्तुं शक्ता जाता ।

राजकुमारीविषये महाराजेन यत् चिन्तितं तद्विरुद्धं व्यवहृतं महाराज्ञ्या । एतदवसरे कथं वा मरालभूपतये मुखं दर्शयेयम् इति चिन्ता प्राप्ता महाराजेन । येन सम्माननं कृतं तस्य उपस्थितौ एव राजा असहायः जातः आसीत् । यदा तेन शान्ततया चिन्तितं तदा देशस्य कष्टग्रस्तता, स्वस्य अविवेकिता च अवगता ।

एतदवसरे राज्ञी स्वयं तं दृष्ट्वा अनुनयेन व्यवहरन्ती वस्तुस्थितिम् अवगमितवती । अतः तेन स्वस्य रणनीतिः परिवर्तिता । किन्तु एतत् परिवर्तनं मरालभूपतिना न ज्ञायते । मरालभूपतिना सहैव कालिन्दीसेना तु निर्गमिष्यति । किन्तु योग्ये काले सा कौण्डिन्यदेशस्य पक्षं समर्थयिष्यति । कालिन्दीदेशस्य राजभवनस्य आन्तरङ्गिकी



वार्ता एषा । तथापि अस्माभिः सावधानता तु आश्रयणीया स्यात् एव'' इति ।

श्रीदत्तः एतत् श्रुत्वा विजयदत्तं पश्यन् मन्दहासपूर्वकम् अवदत् - ''यदि एषा वार्ता अवितथा स्यात् तर्हि भवता ऊहितम् एव युक्तं स्यात् । भगवतः कुलदेव्याः च कृपापात्राणि वयं स्मः एव इति एतस्मात् भाति । चिन्तान्धकारमय्यां रात्रौ आशाकिरणाः स्फुटं दृश्यन्ते इदानीम्'' इति ।

तदा राजगुरुः अवदत् - ''युवराजस्य जातके या अपायसम्भावना दृश्यते स्म तत्सम्बद्धः कालः एतावता अतीतः अस्ति एव । ज्योतिश्शास्त्रेण यत् सूच्यते तत् कदापि मिथ्या न भविष्यति । इदानीं तु ग्रहगतिः राजकुमारस्य नितराम् अनुकूला अस्ति । अतः



शत्रवः तस्य रोम अपि कम्पयितुं न अर्हन्ति । राजकुमारं पराजेतुम् आगताः एव निश्चयेन बद्धाः भविष्यन्ति । अतः शीघ्रातिशीघ्रं सः सिंहासनाधिरूढः भवेत् । सः एव सेनानायकत्वं वहेत् । विजयश्रीः तु तस्य कण्ठे एव मालाम् अर्पयिष्यति इत्यत्र नास्ति लवमात्रेण अपि सन्देहः'' इति ।

शिवानन्दस्य वचनस्य अनन्तरं तत्र क्षणकालं मौनं प्रसृतम् आसीत् । विजयदत्तस्य मौनं दृष्ट्वा श्रीदत्तः अवगतवान् यत् राजगुरोः प्रस्तावः एतस्य सम्मतः अस्ति एव इति । अतः सः करौ योजयित्वा कुलदेवतां प्रणम्य राजगुरुम् अवदत् - ''एषु दिनेषु यद्यत् प्रवर्तमानम् अस्ति तत्सर्वं कुलदेवतायाः इच्छानुगुणम् एव । यावत् सा अस्मद्-रक्षिकात्वेन स्थास्यति तावत् अस्माकं का चिन्ता ? तस्याः प्रेरणा यथा भवति तथा व्यवहरणम् अस्माकं कर्तव्यम् । अतः भवान् यथा आदिशति तथा भवतु नाम'' इति ।

महाराजस्य कथनं श्रुत्वा हर्षं प्रकटयन् अवदत् राजगुरुः - ''साधु महाराज ! भाग्यशालिनं पुत्रं प्राप्तवान् भवान् एव धन्यः । युवराजस्य सिंहासनारोहणार्थं मुहूर्तः अपि नास्ति अतिदूरे । इतः चतुर्णां दिनानाम् अनन्तरं, तन्नाम ज्येष्ठशुक्लपञ्चम्यां शुक्र-वासरे सूर्योदयानन्तरं द्वितीयघट्याम् उत्तमः मुहूर्तः अस्ति । तस्मिन् शुभे मुहूर्ते युवराजस्य पट्टाभिषेकः प्रवर्तताम्'' इति ।

''शत्रुगणेन आक्रमणोद्देशकप्रस्थानार्थं सः एव मुहूर्तः निश्चितः अस्ति । तस्मिन् एव मुहूर्ते अत्र पट्टाभिषेकः प्रवर्तिष्यते !'' इति वचनं विजयदत्तस्य मुखात् अप्रयत्नेन निर्गतम् ।

महाराजः राजगुरोः प्रस्तावं पूर्णमनसा अङ्गीकृतवान् । राज्याभिषेकोत्सवः संक्षिप्तः सरलः च भवतु इति सर्वेषां आशयः आसीत् ।

राज्याभिषेकस्य युद्धस्य च सन्नाहः युगपत् एव प्रचलति स्म । स्वर्णकाराः सिंहासनस्य चाकचक्यतां वर्धयितुं यथा प्रयत्नं कुर्वन्ति स्म तथैव सैनिकाः स्वखड्गानां धारायाः निशिततासम्पादने निरताः आसन् । चत्वारि दिनानि चत्वारः क्षणाः इव अतीतानि । राज्याभिषेकदिनम् आसन्नम् ।

राजसभा पुष्पमालादिभिः अलङ्कृता आसीत् । विविधप्रकारकैः मणिभिः मुक्ताभिः

च सिंहासनस्य शोभा द्विगुणीकृता आसीत् । सिंहासनस्य उभयपार्श्वयोः राजोद्योगिनाम् उपवेशनार्थं व्यवस्था कृता आसीत् । तेषाम् आसनानां पृष्ठतः स्थित्वा जनाः अभिषेक-वैभवं द्रष्टुम् अर्हन्ति स्म ।

सिंहासनम् उभयतः स्थिताः वेदज्ञाः उच्चस्वरेण वेदघोषं कुर्वन्तः आसन् । सर्वे अभिषेकार्थं निश्चितं मुहूर्तं प्रतीक्षमाणाः आसन् । राजगुरोः शिवानन्दवर्यस्य सङ्केतं प्राप्य विजयदत्तः श्रीलेखा च ज्येष्ठान् नमस्कृत्य सिंहासनसमीपं गतवन्तौ । यावत् विजयदत्तः सिंहासनस्य प्रथमे सोपाने पदं स्थापितवान् तावता ध्वनिः श्रुतः - ''विजय-दत्त ! क्षणं तिष्ठतु तावत्'' इति ।

मेघगर्जनसदृशं शान्तगम्भीरं तत् वचनं श्रुत्वा सर्वे दिग्भ्रान्ताः । श्वासं निरुध्य सर्वे अग्रिमघटनां प्रतीक्षमाणाः कुतूहलेन स्थितवन्तः ।

महाराजस्य श्रीदत्तस्य मनः शङ्काकुलं जातम् । सः मनसि एव कुलदेवतां ध्यात्वा क्षमां प्रार्थितवान् ।

'महता वेगेन प्रचलन्तीनां घटनानां पृष्ठ-भूमिकाम् अवगन्तुं कुलगुरुः शिवानन्दवर्यः एकः एव समर्थः । वयं तु निर्जीवक्रीडनकानि इव । गुरुः शिवानन्दवर्यः तु तपस्वी मन्त्रवेत्ता सिद्धपुरुषः च । सः एकः एव प्रपञ्च-प्रवर्तिकां शक्तिम् अवगन्तुं, निग्रहीतुं प्रवर्तयितुं चापि समर्थः । दिव्यशक्तियुक्तं सुवर्णसिंहासनं तु तस्य कृपया एव अस्माभिः प्राप्तम् । सर्वम् अपि तस्य निर्देशस्य अनुगुणम् एव प्रवृत्तम् । एषा राज्याभिषेकव्यवस्था तेन निर्दिष्टेन क्रमेण एव सज्जीकृता । तथापि मध्ये कः एषः विघ्नः ? ....'

एवं चिन्तयन् राजा श्रीदत्तः प्रश्नार्थकदृष्ट्या राजगुरुं दृष्टवान् । विजयदत्तः श्रीलेखा च यन्त्रवत् स्थितवन्तौ । तौ राजगुरुं पश्यन्तौ उक्तवन्तौ - ''गुरुवर्य ! कः आदेशः ? आज्ञाप्यताम्'' इति ।



महासंस्कृत्याः स्थूलदर्शनम्
प्रतियुगं सत्यान्वेषणार्थं कृताः विशेषयत्नाः

# 3. भूलोकम् आगता देवनदी गङ्गा

"किम् एतत् सत्यम् ?" इति आश्चर्येण पृष्टवती चमेली-सन्दीपयोः माता जयश्रीः । तस्याः वचने आश्चर्यम् आनन्दः च दृश्यते स्म ।

"सत्यम् एव अम्ब ! किन्तु प्रामाणिकतया वक्तव्यं चेत् प्रबन्धस्पर्धायां प्रथमस्थानं प्राप्तं यत् तस्य कारणं न अहम्, अपि तु पितामहः एव" इति उक्त्वा सन्दीपः प्रवृत्तम् अवर्णयत् – "प्रबन्धस्पर्धायाः त्रयः विषयाः आसन् । भारतेतिहासीयं भवत्प्रियं पात्रं, भारतीयपुराणोक्तं भवत्प्रियपात्रं, भवत्प्रियं यत्किञ्चित् पात्रम् – इत्येतेषु त्रिषु यङ्कञ्चित् विषयम् अधिकृत्य प्रबन्धः लेखनीयः आसीत् । मया तु द्वितीयः विषयः चितः । नचिकेतसः कथा मया निरूपिता । कथायाः तात्पर्यस्य यत् विश्लेषणं मया कृतं तत् निर्णायकानां प्रियं जातम् । 'यमसमीपं गच्छतु' इति वाजश्रवसः कथनस्य तात्पर्यं यत् मृत्युरहस्यं ज्ञातुं ध्यानं करोतु, तद्विषये चिन्तनं करोतु इति । 'नचिकेताः यमालयं गत्वा त्रीणि दिनानि प्रतीक्षितवान्' इति श्रूयते । तस्य तात्पर्यं यत् नचिकेताः मृत्युरहस्यविषये त्रीणि दिनानि अहोरात्रं चिन्तितवान् इति । एतत्सर्वं मया विवृतम् आसीत् प्रबन्धे ।"

"नचिकेतसः कथा एतादृशं गूढार्थं सङ्केतयति इति अद्यावधि न ज्ञातम् आसीत् मया" इति उक्तवती जयश्रीः ।

"एते गभीराः विचाराः कथारूपेण यदि निरूपिताः न स्युः तर्हि ते विस्मृताः अभविष्यन् । अन्यच्च एतादृश्यः कथाः आ सहस्रशः वर्षेभ्यः अनुवर्तमानाः सन्ति यत् तत्र कारणं तासां गभीरविचारद्योतकत्वम्" इति उक्त्वा सदानन्द-वर्यः बहिर्गमनार्थम् उत्थितः ।

"तात ! किं भवान् वायुविहारार्थं प्रस्थितः ? एषोऽहं भवता सह आगच्छामि" इति उक्तवान्





सन्दीपः ।

''अहम् अपि प्रस्थिता'' इति वदन्ती उत्साहेन उत्थितवती चमेली ।

अचिरात् एव ते नदीतीरं प्राप्तवन्तः ।

''वयं गङ्गायाः उपनद्याः तीरे खलु वसामः ? एषा गङ्गा किमर्थं पवित्रत्वेन परिगण्यते ?'' इति पृष्टवान् सदानन्दवर्यः ।

''अहं जानामि । गङ्गानद्याः तीरे हृषीकेशः, हरिद्वारं, वाराणसी इत्यादीनि पवित्रक्षेत्राणि यतः सन्ति अतः सा नदी पवित्रतमा जाता'' इति उत्साहेन उक्तवती चमेली ।

''विपरीततया वदति भवती । तानि नगराणि यतः गङ्गातीरे सन्ति अतः तानि पवित्राणि जातानि, न तु तेषां कारणतः गङ्गा पवित्रतमा जाता'' इति उक्तवान् सन्दीपः ।

''अलं बुद्धिमत्ताप्रदर्शनसाहसेन'' इति कोपमिश्रितेन स्वरेण उक्तवती चमेली ।

''मया साहसं किमपि न क्रियते । भवतीतः अधिकबुद्धिमान् अहम् अस्मि एव'' इति साभिमानम् उक्तवान् सन्दीपः ।

''अलं विवादेन । भवन्तौ उभौ अपि बुद्धिमन्तौ एव । मत्तः अपि अधिकबुद्धिमन्तौ भवन्तौ । तीर्थस्थानानां कारणतः एव गङ्गा पवित्रतमा जाता इति न । गङ्गाकारणतः एव तानि तीर्थस्थानानि जातानि इत्यपि न । स्ववैशिष्ट्यकारणतः एव तानि पवित्राणि जातानि । गङ्गा किमर्थं पवित्रतमा जाता इति आदौ ज्ञातव्यम्'' इति उक्तवान् सदानन्दवर्यः ।

''कारणं वदतु तात !'' इति अवदत् चमेली ।

''मया किमर्थम् उच्यते ? मया खलु प्रश्नः कृतः ? अतः भवद्भ्याम् एव उत्तरं वक्तव्यम्'' इति हसन् उक्तवान् सदानन्दवर्यः ।

''किन्तु आवाम् उत्तरं न जानीवः खलु ?'' इति अवदत् सन्दीपः ।

''यदि एतावता न ज्ञातं तर्हि ज्ञातुं प्रयत्नः क्रियताम् । मित्राणि अध्यापकाः वा प्रष्टव्याः । पुस्तकानि वा परिशीलनीयानि । एकदिनाभ्यन्तरे विषयसङ्ग्रहः करणीयः'' इति असूचयत् सदानन्दवर्यः ।





यद्यपि तेन गङ्गायाः कथा न उक्ता, तथापि कुतूहलेन आगतयोः बालयोः मनसि निराशा तु न जनिता । सः नैल्नद्याः अमेजान्नद्याः च कथां श्रावितवान्, ये च प्रपञ्चस्य अतिदीर्घ-तमत्वेन ख्याते । अमेरिकीयेन लारेन् मेलन्टैयर्-वर्येण १९७१ तमे वर्षे अमेजान्नद्याः मूलं कथम् अन्विष्टम् इत्यपि तेन निरूपितम् ।

"अतिमहतीनां नदीनां विषये अपि मानवः कथम् उपेक्षां दर्शयितुम् अर्हति ?" इति आश्चर्येण पृष्टवती चमेली ।

"वयं बहूनां विषये अज्ञानिनः । किन्तु एवम् अज्ञानम् अस्ति इति ज्ञानम् अपि नास्ति अस्माकम् । एषा प्रकृतिः मानवस्य उत्पत्तेः पूर्वम् एव उत्पन्ना । आत्मनः अङ्गेषु समतोलनं सृष्टम् आसीत् तया । किन्तु मानवः भाविपरिणामम् अचिन्तयन् पर्वतान् नाशितवान्, नदीः कलुषीकृतवान्, परिसरं च विध्वंसितवान् । किन्तु अस्मत्पूर्वजेषु एषा प्रवृत्तिः न दृश्यते । ते पर्वतं देवत्वेन, नदीं देवीत्वेन च निर्दिष्टवन्तः । ते नदीपर्वतादीनां प्राकृतिकमहत्त्वं जानन्ति स्म । किन्तु सामान्याः जनाः तत् ज्ञातुं न शक्नुवन्ति इत्यतः ते पर्वतादीन् देवत्वेन निर्दिष्टवन्तः । सामान्यैः तु नदीपर्वतादयः देवत्वेन दृष्टाः, भक्त्या पूजिताः च । तेन नदीपर्वतादीनां संरक्षणं सिद्धम्" इति विवृतवान् सदानन्दवर्यः ।

"किन्तु सा दृष्टिः कथं परिवृत्ता जाता ?" इति पृष्टवान् सन्दीपः ।

"मानवे स्वार्थसाधनेच्छा यथा यथा प्रवृद्धा तथा तथा सः तात्कालिकावश्यकतानां पूरणे बद्धादरः जातः । यत् तस्य सन्तोषाय भवति, यतः तस्य लाभः सिद्ध्यति, तस्य प्राधान्यं चिन्तितं तेन । सः न इतिहासं पश्यति, न वा भविष्यं चिन्तयति । वर्तमानमात्रं चिन्तयन् सः परिसरं नाशयन् अस्ति । अरण्यानि उध्वस्ती-करोति सः ! नदीनां मलीनीकरणे न लज्जते तदीयं मनः ।"

ते त्रयः अपि गृहं प्रत्यागताः । परिसरादि विषये सदानन्दवर्येण यत् उक्तं तत् श्रुतवतोः चमेली-सन्दीपयोः मुखं गम्भीरं जातम् आसीत् ।

सदानन्दवर्यः पुनः अवदत् - "अहं चिन्तयामि यत् मत्कालिकी जनता, भवतोः पितुः कालस्य जनता च यादृशविवेकवती आसीत् ततोऽपि अधिकविवेकवती भवेत् भवत्कालिकजनता इति । तथापि भव्यभविष्यतः निर्माणार्थं तु इतिहासस्य अवगमनम् अनिवार्यम् । दिनाभ्यन्तरे भवन्तौ विषयं सङ्गृह्य श्वः गङ्गाविषयिकां कथां वदिष्यतः इति अहं विश्वसिमि" इति ।



अनन्तरदिने चमेली सन्दीपश्च उत्साहेन सदानन्दवर्यस्य प्रकोष्ठं प्रविष्टवन्तौ । सन्दीपः कस्माच्चित् पुस्तकात्, चमेली अध्यापकस्य मुखात् च विषयसङ्ग्रहं कृतवन्तौ आस्ताम् । परस्पर-साहाय्येन तौ कथां पूर्णतः सज्जीकृत-वन्तौ आस्ताम् । तौ कथाम् एवम् उक्तवन्तौ -



"पूर्वं सगरो नाम नृपः आसीत्। सः कदाचित् सङ्कल्पित-वान् आसीत् यत् अश्वमेधयागः करणीयः इति। अश्वमेधयागः प्रवृत्तः। यागाङ्गतया अश्वः प्रेषितः। समग्रे प्रपञ्चे अटित्वा केनापि अबद्धः सः यदि प्रत्यागच्छेत् तर्हि सगरः चक्रवर्ती भवेत्।

किन्तु कदाचित् आश्चर्यकररीत्या सगरस्य अश्वः अदृश्यतां गतः। सर्वत्र यागाश्वः अन्विष्टः। किन्तु फलं किमपि न प्राप्तम्। भूलोके कुत्रापि सः अश्वः यदा न प्राप्तः तदा सगरः स्वस्य षष्टिसहस्रं पुत्रान् आज्ञापितवान् यत् पातालादिषु लोकेषु अन्वेषणं क्रियताम् इति। अतः सगरपुत्राः भूमिं खात्वा पाताललोकं गतवन्तः। तत्र तैः ध्याननिरतस्य कस्यचित् मुनेः पार्श्वे बद्धः यागाश्वः प्राप्तः। 'एषः मुनिः एव अश्वं चोरितवान् स्यात्' इति सगरपुत्राः निर्णीत-वन्तः। किन्तु एतत्सर्वम् इन्द्रेण कृतम् आसीत्। सः यागाश्वं पातालं नीत्वा तस्य मुनेः पार्श्वे बद्ध्वा गतवान् आसीत्।

एतत् अजानन्तः सगरपुत्राः तं मुनिं भर्त्सितवन्तः, पीडितवन्तः च। तेन क्रुद्धः सः मुनिः शापेन तान् सर्वान् भस्मी-कृतवान्। तस्य मुनेः नाम कपिलः इति।

पुत्राणां भस्मीभवनवार्तां श्रुत्वा सगरः नितरां खिन्नः। किन्तु सः एतद्विषये किमपि कर्तुं न शक्तवान्। तस्य पौत्रः अंशुमान् अपि असहायः आसीत्। प्रपौत्रः दिलीपः अपि असहायः एव।

दिलीपस्य पुत्रः भगीरथः। सः पूर्वजानां कथां श्रुत्वा नितरां खिन्नः। 'मत्पूर्वजाः कथञ्चित् सद्गतिं प्राप्नुयुः' इति सङ्कल्प्य सः कपिलाश्रमं गत्वा पूर्वजानां व्यवहारविषये क्षमां सम्प्रार्थ्य शापविमुक्त्युपायं पृष्टवान्।

भगीरथस्य प्रार्थनया व्यवहारेण च सन्तुष्टः



कपिलः अवदत् - ''शापः तु फलितः एव । अतः शापात् विमुक्तिः तु असम्भवा । अतः भवत्पूर्वजाः उज्जीविताः तु न भवेयुः एव । किन्तु तेषां सद्गतिप्राप्त्यर्थम् अस्ति कश्चन उपायः, यश्च नितरां कष्टसाध्यः । यदि देवगङ्गा एतत्प्रदेशे प्रवहेत् तर्हि भस्मीभूताः सर्वे सद्गतिं प्राप्नुयुः । किन्तु देवलोके प्रवहत्याः गङ्गायाः पाताललोकं प्रति आनयनं तु न सुलभसाध्यम्'' इति ।

भगीरथः हिमालयं गत्वा घोरं तपः कृत्वा ब्रह्माणं तोषितवान् । सन्तुष्टः ब्रह्मा यदा प्रत्यक्षः जातः तदा भगीरथः प्रार्थितवान् - 'गङ्गा भूलोकं प्रति प्रेषणीया' इति ।

ब्रह्मा एतत् अङ्गीकृत्य अवदत् - ''गङ्गा यदि साक्षात् भूमौ पतेत् तर्हि भूमिः विनष्टा भवेत् । तदर्थम् उपायः चिन्तनीयः'' इति ।

भगीरथः पुनः अपि घोरं तपः आचर्य शिवम् अतोषयत् । शिवः 'गङ्गायाः पातं वक्ष्यामि' इति अवदत् । गङ्गा देवलोकतः प्रस्थिता । तस्याः पातः भूमिं यथा न नाशयेत् तथा कर्तुं शिवः तां स्वजटाजूटे धृतवान् । ततः गङ्गायाः एका धारा अल्पवेगेन भूमौ अपतत् । गङ्गा भूलोकम् आगता । भगीरथः तां पाताललोकं नीतवान् । गङ्गायाः जलस्य स्पर्शेन सगरपुत्राः सर्वे सद्गतिं प्राप्तवन्तः ।''

कथाकथनस्य समाप्तेः अनन्तरं सन्दीपः अवदत् - ''देवलोकात् यतः गङ्गा आगता, यतः सा सगरपुत्रान् सद्गतीं प्रापितवती, अतः एव सा पवित्रतमत्वेन परिगण्यते'' इति ।

सर्वं श्रुत्वा सदानन्दवर्यः अवदत् - ''विषयं सम्यक् सङ्गृह्य भवन्तौ कथां कथितवन्तौ यत् तदर्थं साधवादः समर्प्यते । एतद्विषये अन्या अपि कथा श्रूयते, या च जनैः बहुधा न ज्ञाता । किन्तु सा गङ्गाकथायाः पृष्टभूमिकां सम्यक् विवृणोति । तदाधारेण वयं गङ्गाकथायाः तात्पर्यं स्पष्टतया अवगन्तुं शक्नुयाम । अत्र स्मर्तव्यं यत् कथाः सर्वाः साङ्केतिकं कमपि अर्थविशेषं निरूपयन्ति इति । देवनदी गङ्गा मृतान् सद्गतिं प्रापयति यत् तस्य तात्पर्यं भवति - पवित्रा एषा मरणकारणं निवारयति इति'' इति ।

''गङ्गायाः विषये श्रूयमाणा सा अपरा कथा का ?'' इति कुतूहलेन पृष्टवती चमेली ।

''पुनः कदाचित् कथयिष्यामि वत्से !'' इति उक्तवान् सदानन्दवर्यः ।

- *(अनुवर्तते)*





# अल्पस्य सत्कार्यस्य अपारं फलम्

वीरभद्रः बाल्ये एव मातापितृविहीनः जातः आसीत् । अतः पितामहः राघवः एव तं प्रीत्या लालितवान् पोषितवान् च । राघवस्य अल्पा शाकवाटिका आसीत् । तत्र शाकान् वर्धयित्वा विक्रीय प्राप्तेन धनेन सः व्ययभारं निर्वहति स्म ।

पितामहेन अतिप्रीत्या लालितः वीरभद्रः अध्ययने आसक्तिं न प्राप्तवान् । आलस्येन विद्याभ्यासं परित्यज्य इतस्ततः सञ्चरन् सः सुखेन जीवनं यापयति स्म । अल्पम् अपि परिश्रमं न करोति स्म सः । राघवः वार्धक्य-कारणतः यदा दुर्बलः जातः तदा गृहे कष्टम् आरब्धम् । व्ययार्थं वीरभद्रेण धनं न प्राप्यते स्म । भोजनव्ययस्य अपि निर्वहणे क्लेशः आसीत् ।

वीरभद्रः परिचितेभ्यः ऋणस्वीकरणम् आरब्धवान् । राघवं स्मरन्तः केचन किञ्चित्कालम् ऋणं दत्तवन्तः । किन्तु अग्रे ते ऋणदानं स्थगितवन्तः । यदा धनाभावक्लेशः अधिकः जातः तदा वीरभद्रः धनसम्पादनार्थं बलप्रयोगम् आरब्धवान् ।

आ बाल्यात् प्रतिदिनं सम्यक् खादन् वीरभद्रः सुदृढं शरीरं प्राप्तवान् आसीत् । एषा दृढकायता बलप्रयोगाय अनुकूलकरी जाता । दण्डं हस्तेन गृहीत्वा क्रोधवचनैः भाययित्वा जनेभ्यः बलात् प्रभूतं धनं प्राप्नोति स्म सः ।

पौत्रस्य एतां प्रवृत्तिं दृष्ट्वा राघवः नितरां खिन्नः । 'आ बाल्यात् एषः मया लालितः । मम लालनम् एव एतस्य दुष्प्रवृत्तेः मूल-कारणम्' इति चिन्तयन् सः पश्चात्तापम् अनुभूतवान् ।

वीरभद्रः बुभुक्षायां सत्यां कुत्रचित् किमपि क्रीत्वा भुक्त्वा रात्रौ मन्दिरे शयनं करोति स्म । गृहं प्रति विरलतया एव आगच्छति स्म सः ।

कदाचित् वीरभद्रः धर्मशालायां शयनं कृतवान् आसीत् । पूर्वं वीरभद्रतः प्रहारं प्राप्तवान् कश्चित् प्रतीकारोद्देशेन दण्डं गृहीत्वा मध्यरात्रे वीरभद्रं मारयितुम् आगतवान् । तं दृष्ट्वा वीरभद्रस्य पार्श्वे स्थितः कश्चन शुनकः अभषत् । ततः वीरभद्रः जागरणं प्राप्तवान् ।



प्रहर्तुम् आगतस्य, वीरभद्रस्य च कलहः आरब्धः । धर्मशालास्थाः जनाः आगत्य तयोः कलहं निवारितवन्तः ।

तस्मात् दिनतः वीरभद्रस्य प्रियः जातः सः शुनकः । सः सदा वीरभद्रेण सह अटति स्म । वीरभद्रः तस्मै प्रतिदिनं भोजनादिकं ददाति स्म । अल्पे एव काले सः शुनकः बलवान् जातः । तस्य दर्शनात् एव जनाः भीताः भवन्ति स्म । वीरभद्रः तेन सह आपणान् गत्वा बलात् धनं स्वीकरोति स्म । आपणिकाः भीत्या एव शुनकाय अपि खादितुं यच्छन्ति स्म । बलप्रयोगव्यवहारतः वीरभद्रसमीपे किञ्चित् धनं सङ्गृहीतम् अभवत् । सः गृहं प्रति गमनम् एव विस्मृतवान् इव ।

कदाचित् वीरभद्रेण राघवस्य अस्वास्थ्य-वार्ता श्रुता । अतः सः गृहं गतवान् । तदा शयानः राघवः क्षीणस्वरेण अवदत् - ''वत्स ! भवतः एव चिन्ता मम । न कृषिः क्रियते, न वा उद्योगः । एवं चेत् भवतः जीवनं कथं प्रचलेत् वत्स ?'' इति ।

''तात ! अलं मद्विषये चिन्तया । सुखेन जीवनं यापयितुं यावत् आवश्यकं तावत् धनम् अस्ति एव मम समीपे'' इति उक्तवान् वीरभद्रः ।

राघवः पौत्रस्य व्यवहारं सम्यक् जानाति स्म । अतः सः बोधितवान् - ''मूर्ख ! अन्याय्येन सम्पादितं धनं कदापि उपकारं न करोति । कदाचित् आकस्मिकतया अदृश्यतां गच्छेत् तत् । जीवने उत्तमगुणाः आदौ सम्पादनीयाः । ते एव धनसम्पादनस्य हेतवः भवन्ति । आपत्काले मानवस्य समीपे उत्तमाः गुणाः स्युः, न्यायमार्गेण सम्पादितं धनं वा स्यात् । तदुभयम् अपि यस्य न भवति सः आपदि निश्चयेन महत् कष्टम् अनुभवति'' इति ।

एषः उपदेशः वीरभद्रे कमपि परिणामं न अकरोत् । तानि अश्रुतवान् इव ततः निर्गतवान् वीरभद्रः ।

एकदा वीरभद्रस्य शुनकः मरणं प्राप्नोत् । पार्श्वग्रामात् आगतः सिंहसदृशः कश्चन महाशुनकः वीरभद्रशुनकम् अमारयत् । प्रियस्य शुनकस्य मारणात् वीरभद्रः शोक-सागरे निमग्नः जातः ।

वीरभद्रः दिनद्वयं यावत् न भोजनं कृतवान्, न वा निद्रां कृतवान् । आदिनं मृतं

शुनकं स्मरन् मौनेन रोदिति स्म सः । पौत्रस्य एतां दुर्दशां ज्ञात्वा राघवः वीरभद्रम् अन्विष्य आगत्य स्वगृहं नीतवान् । वीरभद्रः अश्रूणि स्रावयन् एव प्रवृत्तं सर्वं पितामहं निवेदितवान् ।



सर्वं श्रुत्वा राघवः वीरभद्रं सान्त्वयन् - "वत्स ! एवम् आहारादिकं परित्यज्य रोदनं क्रियते चेत् किं प्रयोजनम् ? उत्थाय यावत् रोचते तावत् खादतु तावत् । कस्यापि जीवनं न शाश्वतम् । अद्य शुनकस्य या गतिः जाता सा श्वः भवतः एव भवेत् अपि । भवता पीडिताः बहवः प्रतिक्षणं शापदानेन भवतः मरणम् अपेक्षमाणाः सन्ति । बलप्रयोगेण भवता यथा धनं सम्पादितं तथा जनानां विरोधः अपि सम्पादितः । जनशापः भवतः अभ्युदयं नाशयेत् एव । वस्तुतः सद्व्यवहारः एकः एव तारकः । तत् आस्तां तावत् । इदानीं भोजनं करोतु" इति उक्त्वा वीरभद्रं पाकशालां नीत्वा भोजितवान् ।

पितामहस्य अनुरोधस्य कारणतः वीरभद्रः भोजनं तु कृतवान्, किन्तु तस्य दुःखस्य आवेगः न उपशान्तः । अतः सः गृहे मौनेन उपविशति स्म । तदवसरे शुनकस्य मरणं, पितामहस्य वचनं च तस्य मनसि आवर्तते स्म पुनः पुनः ।

कदाचित् वीरभद्रः स्वगृहस्य पुरतः उपविष्टः आसीत् । तदा अप्रयत्नेन तेन पार्श्वगृहे प्रचलत् सम्भाषणं श्रुतम् । प्रतिवेशी जगदीशः दिनद्वयतः ज्वरपीडितः सन् अपि क्षेत्ररक्षणार्थं गन्तुम् उद्युक्तः आसीत् । पत्नी पुत्री च वदतः स्म - 'अद्य भवतः गमनं मास्तु' इति । 'सस्यानि फलसमृद्धानि सन्ति । एतस्मिन् काले रक्षणे उपेक्षा क्रियते चेत् चोराः चोरयेयुः, प्राणिनः नाशयेयुः वा' इति अवदत् जगदीशः ।

एतत् दृष्टवति वीरभद्रे करुणा उदिता । सः जगदीशसमीपं गत्वा - "आर्य ! अद्य भवतः क्षेत्रम् अहं रक्षिष्यामि । गृहे उपविष्टवतः मम विशेषकार्यं किमपि नास्ति । भवान् दिनद्वयतः ज्वरपीडितः अस्ति । ज्वरपीडितस्य बहिर्गमनं, तत्रापि रात्रौ शैत्ये क्षेत्रे वासः, नितरां हानिकारकम् । अतः भवान् गृहे शयानः विश्रान्तिं स्वीकरोतु" इति अनुरोधपूर्वकम् उक्त्वा क्षेत्ररक्षणार्थं निर्गतवान् ।

जगदीशस्य पुत्री सुगुणा तस्मै पाथेयं

सज्जीकृत्य दत्तवती । वीरभद्रे जातं परिवर्तनं दृष्ट्वा राघवः जगदीशः च नितरां सन्तुष्टौ ।

अनन्तरदिने प्रातः दशवादनम् अतीतं चेदपि वीरभद्रः गृहं न प्रत्यागतः । अतः राघवः तम् अन्विष्यन् केदारं गतवान् । तत्र प्रहारं प्राप्य विसंज्ञः सन् केदारपार्श्वे गुल्ममध्ये पतितः आसीत् वीरभद्रः । राघवः भीत्या क्रन्दन् जनान् आहूय तेषां साहाय्येन पुत्रं गृहं नीतवान् ।

प्रवृत्तं तु एतत् - जगदीशस्य दूरबन्धुः कश्चन 'सुगुणाम् अहं परिणेतुम् इच्छामि' इति पुनः पुनः वदति स्म । सुगुणां परिणीय जगदीशस्य समग्रा सम्पत्तिः स्वायत्तीकरणीया इति तस्य चिन्तनम् । जगदीशः तस्य दुरुद्देशं जानन् तस्मै पुत्र्याः दानं निराकृतवान् आसीत् । सुगुणा, जगदीशस्य सम्पत्तिः च बलात् वशीकरणीया इति निश्चित्य सः दूरबन्धुः चतुर्भिः सहायकैः सह जगदीशं भाययितुम् आयुधहस्तः सन् केदारम् आगतवान् । केदारे रक्षणकार्ये निरतः वीरभद्रः तैः सह युद्धं कृतवान् । युद्धं कुर्वन् जनः न जगदीशः इति यावत् तैः ज्ञातं तावता वीरभद्रेण बहवः प्रहाराः प्राप्ताः आसन् । अन्ते ते तं शिरसि प्रहृत्य ततः पलायितवन्तः आसन् ।

वीरभद्रस्य चिकित्सार्थं जगदीशः प्रभूतं धनं व्ययीकृतवान् । तदीया पुत्री सुगुणा तु अहोरात्रं तस्य पार्श्वे तिष्ठन्ती सेवां कृतवती । योग्यया सेवया वीरभद्रः स्वस्थः जातः ।

एकदा प्रातः राघवः पौत्रम् अवदत् - "वीरभद्र ! भवता यत् एकम् उत्तमं कार्यं कृतं तस्य सुमहत् प्रतिफलं प्राप्यमाणम् अस्ति । समग्रां भूमिम्, ऐश्वर्यम्, अद्वितीयं पुत्रीं च भवते दातुम् इच्छति जगदीशः । भवतः नामस्मरणमात्रेण सुगुणा लज्जया आरक्तमुखी भवति । उत्तमव्यवहारस्य निमित्तं भवता अपारा सम्पत्तिः अपूर्वा पत्नी च प्राप्येते !" इति ।

वीरभद्रस्य नेत्राभ्याम् आनन्दाश्रूणि निर्गतानि । एकस्य सत्कार्यस्य फलरूपेण एतादृशं प्रतिफलं प्राप्येत इति स्वप्ने अपि न चिन्तितम् आसीत् तेन । 'सर्वं मम अभ्युदयाय एव' इति चिन्तयन् महान्तं सन्तोषं प्राप्तवान् सः ।



# मन्दिराणि स्थलपुराणानि च

*वर्णनम्* – **जयन्ती महालिङ्गम्**

*चित्रम्* – **गौतमसेनः**




सेलमूनगरस्य नैर्ऋत्यदिशि भवानीपत्तनम् अस्ति । भवानीनद्याः कारणात् एतस्य नगरस्य एतत् नाम आगतम् । केरलीये वळ्ळुवकाडुपर्वते जाता, तमिळुनाडुराज्ये कोयम्बत्तूरुजनपदे ईरोडुजनपदे च प्रवहन्ती एषा भवानीनदी २१७ कि.मी.दैर्घ्येण युक्ता अस्ति । मध्येमार्गं सिरुवाणी, चिट्रार्, कण्णूर्, कुन्दा, मोयार् इत्यादयः लघुनद्यः तया मिलन्ति ।

भवानी-कावेर्योः सङ्गमस्थलं पवित्रतीर्थक्षेत्रत्वेन परिगण्यते । तत्रैव गुप्तगामिनी अमुदा अपि सम्मिलिता भवति इति जनाः भावयन्ति । 'अमृतकलशं राक्षसेभ्यः रक्षितुं पराशरमुनिः भवनीसमीपे भूमौ निखातवान् । पुनः यदा दृष्टं तदा तत्र अमृतकलशस्थले एकं शिवलिङ्गं दृष्टिगोचरं जातम् । तत् उन्नेतुं तेन प्रयत्नः कृतः । किन्तु तत् कम्पयितुम् अपि न शक्तः सः । पुनः यदा प्रयत्नः कृतः तदा शिवलिङ्गतः जलधारा काचित् निर्गता । सा एव अन्तर्वाहिनी सती 'अमुदा'नाम्ना प्रवहन्ती भवानीकावेरीसङ्गमे सङ्गता भवति' इति कथा श्रूयते ।

भवान्याम् अस्ति सङ्गमेश्वरमन्दिरम् । तमिळुनाडुराज्ये स्थितेषु प्रसिद्धमन्दिरेषु अन्यतमम् अस्ति एतत् । एतत् स्थलं दक्षिणप्रयागः, दक्षिणबदरी, त्रिवेणीसङ्गमस्थलम् इत्यादिभिः नामभिः अपि निर्दिश्यते । एतत् परितः शङ्खगिरिः, तिरुच्चेङ्गोडु, पद्मगिरिः, मङ्गलगिरिः, वेदगिरिः चेति पञ्च गिरिदेवालयाः



*भवानीस्थं सङ्गमेश्वरमन्दिरम्*

सन्ति ।

१९०० तमे क्रिस्ताब्दे एड्वाण्ड् ग्यार्-नामकः सङ्गमसमीपे कस्मिंश्चित् गृहे वसति स्म । कदाचित् मध्यरात्रसमये सङ्गमस्थले महापूरः आगतः । तदीयं वासगृहं पुरातनदुर्गं च जले निमग्नं जातम् । किन्तु दैववशात् सः आंग्लाधिकारी सुरक्षिततया अतिष्ठत् । यतः महापूरस्य आगमनात् पूर्वम् एव सः गृहात् निर्गतः आसीत् । भगवती वेदनायिका स्वप्ने दृष्टिगोचरा सती महापूरविषयम् उक्तवती आसीत् इति कथा श्रूयते । एतस्य प्रतिफलरूपेण सः आंग्लाधिकारी देव्यै आभरणानि दन्तशिबिकां च निर्माय समर्पितवान् । भवानीतः अग्रे ईरोड-नगरम् अस्ति । पेरुम्पालयं, कलिङ्गरायन् इत्येतत् कुल्याद्वयं कावेरीतः निर्मितम् अस्ति इत्यतः एतेन नगरेण तादृशं नाम प्राप्तम् अस्ति । 'ओडै' इत्येतस्य तमिळुपदस्य अर्थः कुल्या इति । ईरोडै = कुल्याद्वयम् । 'ईर्-ओड्डु' पदस्य आर्द्रकपालः इत्यपि अर्थः अस्ति । देवीभागवते दक्षयज्ञकथा निरूप्यते । दक्षप्रजापतिः यज्ञार्थं सर्वान् आहूतवान् । जामातरं शिवं तु न आहूतवान् - 'अपमानः करणीयः' इति उद्देशेन एव । पुत्री अपि तेन न निमन्त्रिता । शिवेन निषिध्यमाना अपि दाक्षायणी(पार्वती) पित्रा क्रियमाणं यागं प्रति गतवती । तत्र अपमानं प्राप्य सा यज्ञकुण्डे आत्मानं समर्प्य इहलोकव्यवहारं समापितवती । एतां वार्तां श्रुतवान् शिवः क्रोधेन जटाजूटं भूम्या आघट्टितवान् । तदा वीरभद्रः भद्रकाली च उत्पन्नौ । तौ यज्ञध्वंसार्थं प्रेषितौ । तौ यज्ञशालां गत्वा दक्षप्रजापतिं तदनुयायिनः च मारयित्वा शवान् अग्नौ पातितवन्तौ । अदग्धाः कपालाः तैः कावेरीतीरे क्षिप्ताः । ते च कपालाः अद्यापि आर्द्राः एव सन्ति । आर्द्रकपालाः यत्र सन्ति तदेव 'ईरोड्डु' (आर्द्रकपालोपेतस्थलम्) इति प्रसिद्धम् इति श्रूयते किञ्चन स्थलपुराणम् ।


शिवलिङ्गम् उन्नेतुं प्रयतमानः पराशरमुनिः

ईरोडुनगरस्य नैर्ऋत्यदिशि उत्पन्ना नोय्याल्नदी कोयम्बत्तुरु, तिरुप्पूरु इत्यादिषु नगरेषु प्रवहन्ती करूरुसमीपे कावेर्या सङ्गता भवति ।

तमिळुनाडुराज्यस्य महानगरेषु द्वितीयं स्थानं कोयम्बत्तूरुनगरस्य । एतत् नगरं परितः ३००० यन्त्रागाराणि वयनकेन्द्राणि वा सन्ति । अतः एतत् नगरं 'दक्षिणभारतस्य म्याञ्चेस्टर्' इति कथ्यते क्वचित् । कोयम्बत्तूरुतः सप्त कि.मी.दूरे नोय्याल्नद्याः तीरे स्थितं पेरूरुपट्टीश्वरस्वामिमन्दिरं किञ्चन

प्रसिद्धं शिवमन्दिरम् । अत्र 'कनकसभा'-नामके मण्डपे अपूर्वाणि शिल्पानि दृष्टिगोचराणि भवन्ति ।

एषः देवालयः प्रथमे क्रिस्तशतके कदाचित् निर्मितः स्यात् इति परिभाव्यते । अत्रत्यं गर्भगृहं करिकालचोलः निर्मापितवान् ।

करूरुसमीपे तृतीया उपनदी अमरावती कावेर्या सङ्गता भवति । एषा कोयम्बत्तूरुजनपदीये ओनमलैनामके पर्वते जन्म प्राप्य २०० कि.मी.दूरं प्रवहति । एतस्याः प्रवाहं निरुध्य यः जलबन्धः निर्मितः ततः विशाला कृषिभूमिः उत्तमां फलसमृद्धिम् उत्पादयति । एतस्मात् सङ्गमात् आरब्धा उय्यकोण्डन्कुल्या तिरुचिरापल्लिनगरं प्रति जलं प्रापयति ।

प्राचीनकाले चेर-चोल-पाण्ड्यराज्यानां सीमां कल्पयतः स्म कावेरी अमरावती च । एतेषां त्रयाणां देशानां राजानः विशेषकार्यारम्भात् पूर्वं सङ्गमस्थायै चेल्लाण्डिदेवीं विशेषतः पूजयित्वा प्रार्थनां कुर्वन्ति स्म । अत्र कश्चन अगस्त्यमुनेः आलयः अपि अस्ति । इतः अनतिदूरस्थे नेरूरुप्रप्रदेशे कश्चिमठीयानां परमशिवेन्द्रसरस्वतीस्वामिनां शिष्यवरस्य भक्तकवेः योगिनः सदाशिवब्रह्मेन्द्रवर्यस्य स्मारकस्थानम् अस्ति । तस्य जीवितकाले प्रवृत्ता काचित् घटना जनैः अद्यापि स्मर्यते । कदाचित् सः कावेरीतीरे उपविश्य ध्याननिरतः आसीत् । तदा महापूरः उद्गतः नद्याम् । सः जलेन आवृतः सन् सिकताराशौ निलीनः । केचन एतत् ज्ञात्वा यदा सिकताराशिम् अपनीतवन्तः तदा सहजतया ध्यानात् उत्थितः इव सदाशिवब्रह्मेन्द्रवर्यः उत्थाय ततः निर्गतवान् ! तिरुवय्यारुप्रदेशे कावेरीनदी यथा त्यागराजकीर्तनानि ध्वनयति तथैव नेरूरुप्रदेशे सा सदाशिवब्रह्मेन्द्रवर्यस्य कीर्तनानि ध्वनयति इति कथा श्रूयते ।

आ मेट्टूरुतः आ-तिरुचनापल्लि अत्यधिकतया औद्यमिकता परिदृश्यते । मेट्टूरु-भवानी-जलबन्धं परितः स्थिते प्रदेशे कावेर्याः सहायिकानां भवानी-नोय्याल-अमरावतीनां तीरे अनेकानि यन्त्रागाराणि स्थापितानि सन्ति । यन्त्रागारादीनां कारणतः सहस्रशः जनाः उद्योगं प्राप्तुम् अर्हन्ति इत्येतत् सत्यम् एव चेदपि ततः जायमानं



*कोडुमुडिस्थः देवालयः*

परिसर-मालिन्यं न अल्पम् । यन्त्रागाराणि यत् मलिन-जलं नदीजलेन मिश्रयन्ति ततः नद्यः कलुषितजल-वाहिन्यः जायमानाः सन्ति । मेट्टूरु, भवानी, ईरोड्, कोयम्बत्तूरु, तिरुप्पुर् इत्यादीनां नगराणां कलुषितजलानि च प्रतिदिनं कावेरी, तत्साहायकनदीः च प्रविशन्ति । तानि जलानि रासायनिकपदार्थैः उपेतानि भवन्ति एव । तस्य परिणामतः तत्परिसरे निवसतां जनानाम् आरोग्यं, सस्यवृद्धिः च अपायग्रस्तं जातम् अस्ति ।



*तिरुप्पूरुप्रदेशे प्रदूषितजलं वहन्ती नोय्यालनदी*

भवानीनद्याः जलं तावत् विषमयं जातम् अस्ति यत् तस्याः तीरे इक्षु-व्रीहि-कलायादीनां या कृषिः महता प्रमाणेन प्रचलति स्म सा नितरां क्षतिग्रस्ता जाता अस्ति । पूर्वं भवानीसागरबन्धे मत्स्याः महता प्रमाणेन प्राप्यन्ते स्म । इदानीं तत्र मत्स्याः अतिविरलाः जाताः । कासाञ्चित् जातीनां मीनाः तु नामावशेषतां गताः । अत्रत्यं जलं ये पिबन्ति ते विविधैः श्वासकोषव्याधिम् उदरव्याधिं च प्राप्नुवन्ति ।

दिने दिने वर्धमानं परिसरमालिन्यम् अवरोद्धुं १९९३ तमे क्रिस्ताब्दे एकम् आन्दोलनं प्रवृत्तम् । तस्य परिणामतः न्यायालयेन आदेशः कृतः यत् यन्त्रागारेभ्यः यत् कलुषितजलं निर्गच्छति तत् यन्त्रसाहाय्येन स्वच्छीकृत्य एव नदीं प्रति प्रेषणीयम्, अन्यथा यन्त्रगाराणां स्थगनार्थम् आदेशः दीयते इति ।

प्रदूषणाधिक्यकारणतः नोय्यालनदी अपि 'मलिननदी'बिरुदं प्राप्तवती अस्ति । एषा १७३ कि.मी. दीर्घा । एतस्याः तीरे कोयम्बत्तुरु, तिरुपूर - इत्यादिषु स्थलेषु ८०० यन्त्रागाराणि सन्ति । एतानि वस्त्रवर्णयोजनादिकार्यं कुर्वन्ति । एतैः विसृज्यमानं कलुषित-रासायनिकपदार्थोपेतं जलं नदीजलं मलिनीकरोति । कृष्यर्थम् एव १९९२ तमे वर्षे ओरुत्तपालयंप्रदेशे एकः जलबन्धः निर्मितः आसीत् । इदानीं नोय्यालनद्याः जलं नितरां कलुषितम् अस्ति इत्यतः तस्मात् जलबन्धतः प्राप्यमाणं जलं कृष्यर्थम् उपयोक्तुम् अनर्हं जातम् अस्ति । एतां विलक्षणपरिस्थितिम् अवगत्य न्यायालयेन आदेशः कृतः अस्ति - 'तिरुप्पूरुयन्त्रगाराणि प्रतिवर्षं २००० कोट्यधिकरूप्यकाणि अर्जयन्ति यत् ततः, जलाशयस्य नदीनां च स्वच्छतारक्षणं तेषां कर्तव्यं भवति । सर्वैः यन्त्रागारैः सम्भूय जलशुद्धीकरण-यन्त्रं योजनीयम् । जल-मालिन्यं कथमपि निवारणीयम् एव'' इति ।



*ईरोड्डुसमीपे यन्त्रगाराणां कलुषितजलं वहन्ती मलिना कावेरी*



# शरणस्य बुद्धिमत्ता

कस्मिंश्चित् ग्रामे शरणः भरणः चेति उभौ स्नेहितौ आस्ताम् । तौ द्वौ अपि सर्वदा मिलित्वा एव कार्याणि कुरुतः स्म । परन्तु सर्वे जनाः शरणस्य बुद्धिमत्ताम् एव श्लाघन्ते स्म, भरणं च निष्प्रयोजकं वदन्ति स्म । एतस्मात् भरणः महान्तं खेदम् अनुभवति स्म । किन्तु शरणः मित्रं सर्वदा प्रोत्साहकवचनैः उद्बोधयन् वदति स्म - ''अन्ये किमपि वदन्ति चेत् भवान् तस्मिन् विषये खेदं मा अनुभवतु । आत्मनः तृप्तिः अस्ति चेत् पर्याप्तम्'' इति ।

अथ कदाचित् तौ नगरं प्रति प्रस्थितवन्तौ । नगरतः 'पत्न्याः कृते सुवर्णमयः कण्ठहारः आनेतव्यः' इति तयोः उभयोः अपि महती इच्छा आसीत् । तौ नगरं प्राप्तवन्तौ । नगरे गमनमार्गे एव विद्यमानस्य कस्यचित् वृक्षस्य अधः द्वौ प्रयाणिकौ उपविश्य वार्तालापमग्नौ आस्ताम् । तयोः सम्भाषणं श्रुत्वा शरणः भरणश्च तयोः समीपं गत्वा - ''कः विशेषः ?'' इति पृष्टवन्तौ ।

तयोः एकः उत्तमं वस्त्रं धृतवान् आसीत् । सः उक्तवान् -''अहं तु कश्चन वणिक् । वाणिज्यं कृत्वा बहु धनं सम्पादितवान् अस्मि । मम द्वे पुत्र्यौ । तयोः एकवारम् एव कश्चन विचित्रः रोगः आरब्धः । महान् प्रयत्नः कृतः चेत् अपि रोगस्य उपशमनं न अभवत् । अन्ततो गत्वा कश्चन संन्यासी तयोः रोगं दृष्ट्वा माम् उक्तवान् - 'भवान् पापी अस्ति । भवतः पापं यत् अस्ति तत् भवतः पुत्र्यौ पीडयति । अतः भवता प्रतिदिनं पुत्र्योः कृते सुवर्णमयः कण्ठहारः कारणीयः । ततः, एवं कारितान् हारान् स्वीकृत्य भवता विभिन्नानि स्थलानि गत्वा अर्धमूल्येन तेषां विक्रयणं करणीयम् । एवं दश दिनानि क्रियते चेत् भवतः पुत्र्यौ रोगात् मुक्ते भविष्यतः' इति । अतः अहं कण्ठहारान् विक्रेतुम् अत्र आगतवान् अस्मि । एषः कश्चन स्वर्णकारः । मम कथां श्रुत्वा एषः तान् कण्ठहारान् परीक्ष्य



स्वयमेव क्रेतुम् इष्टवान् अस्ति । परन्तु एतस्य समीपे केवलं पञ्चशतं रूप्यकाणि सन्ति । अतः एषः - 'भवान् मम ग्रामम् आगच्छति चेत् अवशिष्टं धनं दास्यामि । अथवा मम समीपे विद्यमानम् अङ्गुलीयकम् एव स्वीकरोतु' इति वदति । सायङ्कालात् पूर्वं मया ग्रामः प्राप्तव्यः अस्ति । मम ग्रामस्य मार्गः अन्यः । एतस्य स्वर्णकारस्य ग्रामस्य मार्गः एव अपरः । एषः स्वर्णकारः इति कारणात् मम कण्ठहाराः उत्तमाः सन्ति इति निश्चितम् अभवत् । परन्तु एतस्य अङ्गुलीयकं सुवर्णस्य एव वा इति मया कथं ज्ञातव्यम् ? इदानीम् एव मम पुत्र्योः कृते सहस्राधिक-रूप्यकाणि व्ययीकृतवान् अस्मि । सहस्र-रूप्यकमूल्यानां कण्ठहाराणां विक्रयणं केवलैः पञ्चशतरूप्यकैः कुर्वन् अस्मि । इतोऽपि न्यूनमूल्येन दातुं न शक्यते । एतस्य समीपे केवलं पञ्चशतं रूप्यकाणि सन्ति । अतः - 'एकम् एव कण्ठहारं स्वीकरोतु' इति अहम् उक्तवान् । मया उक्ते वाक्ये दोषः अस्ति किम् ?'' इति ।

एतत् श्रुत्वा स्वर्णकारः कोपेन - ''आवयोः मध्ये अन्येषां चञ्चूप्रवेशः न युक्तः'' इति उक्तवान् ।

तदा भरणः झटिति उक्तवान् - ''भोः ! आवाम् उभौ अपि कण्ठहारं क्रेतुम् एव नगरम् आगतवन्तौ । एतत् कण्ठहारद्वयमपि आवयोः कृते ददातु । उचितं मूल्यं दत्त्वा आवां कण्ठहारं क्रीणीवः'' इति ।

भरणस्य वचनं श्रुत्वा स्वर्णकारः - ''एतत् तु अन्याय्यम् । मह्यम् एकः कण्ठहारः दातव्यः एव क्रयणार्थम्'' इति उक्तवान् ।

तथापि वणिक् 'एतावत्पर्यन्तं स्वर्णकारः मां बहुधा पीडितवान्' इति चिन्तयन् कोपेन तस्मै वणिजे कण्ठहारं न दत्तवान् । अतः शरणः भरणश्च सहस्रं रूप्यकाणि दत्त्वा कण्ठहारद्वयमपि क्रीत्वा सन्तोषेण ग्रामं प्रति प्रस्थितवन्तौ । सुवर्णस्य विषये सन्देहः नास्ति चेदपि एकवारं ग्रामे विद्यमानस्य स्वर्णकारस्य समीपे कण्ठहारद्वयमपि नीतवन्तौ ।

स्वर्णकारः कण्ठहारं परीक्ष्य उक्तवान् - ''एतौ सुवर्णमयौ न । एकस्मै कण्ठहाराय पञ्चविंशतिं रूप्यकाणि दातुं शक्यते । भवन्तौ तु अधिकं धनं न दत्तवन्तौ खलु ?'' इति ।

तदा शरणः खेदेन उक्तवान् - ''हा हन्त ! अधिकम् एव दत्तम् अस्ति आवाभ्याम् ।

प्रतिकण्ठहारं पञ्चाशतं रूप्यकाणि दत्तानि सन्ति !'' इति ।

ततः उभौ अपि कण्ठहारान् स्वीकृत्य गृहं गतवन्तौ । प्रथमं शरणस्य गृहं प्राप्तम् । सः प्रवृत्तं सर्वं पत्नीम् उक्तवान् । तदा तस्य पत्नी - ''एवं जनाः वञ्चयितुम् एव प्रतीक्षां कुर्वन्तः भवन्ति इति वयं ज्ञातुं न शक्नुमः । यदि सः उत्तमम् एव सुवर्णं दत्तवान् स्यात् तर्हि उत्तमः अवकाशः त्यक्तः अभविष्यत् । बुद्धिमन्तः जनाः उत्तमान् अवकाशान् न त्यजन्ति । भवान् तु बुद्धिमान् अस्ति । भवता युक्तम् एव कृतम् । परन्तु अदृष्टं साहाय्यं न अकरोत्'' इति सान्त्वनवचनानि उक्तवती ।



शरणस्य पत्न्याः वचनं श्रुत्वा भरणः किञ्चित् समाधानं प्राप्तवान् । तस्य गृहतः शीघ्रं स्वगृहं गतवान् सः । परन्तु तस्य पत्नी तदीयं कथनं श्रुत्वा - ''भवतः बुद्धिमत्तां जानती अपि अहं भवता सह न आगतवती यत् तेन अहम् एव मूर्खा अभवम् । किं भवतः निन्दनेन ? अर्धमूल्येन कोऽपि उत्तमं सुवर्णं दद्यात् इत्यत्र कथं विश्वसितवान् भवान् ? शरणः अपि क्रयणसमये आसीत् इत्यतः ज्ञायते यत् तस्य अपि अस्मिन् कार्ये सहभागः स्यात् इति'' इति तर्जितवती ।

भरणः तु मनसि एव - 'शरणः अदृष्टवान् अस्ति । यतः सः वञ्चितः चेत् अपि तस्य पत्नी तदीयां बुद्धिमत्तां श्लाघितवती । मम पत्नी - 'सः बुद्धिमान् न । सः अपि वञ्चकः स्यात्' इति उक्तवती । मां तु 'निस्सन्देहं भवान् बुद्धिहीनः' इति तर्जितवती । एषः मम दुरदृष्टम् अस्ति । अहम् अपि किं वा कर्तुं शक्नुयाम् ?' इति खेदम् अनुभवन् गृहे एकस्मिन् कोणे उपविश्य चिन्तासागरे निमग्नः अभवत् ।

ततः शरणः - ''अहं तु सुलभतया वञ्चितः अभवम् । तथापि मम पत्नी मां बुद्धिमन्तम् उक्तवती । अतः नष्टं धनं मया कथञ्चित् सम्पादनीयम्'' इति निश्चित्य उपायचिन्तनम् आरब्धवान् । एवं चिन्तनसमये कश्चन विचारः तस्य मनसि आगतः ।

'आवाभ्यां नगरं गतम् इति कोऽपि न जानाति । परन्तु आवयोः गमनं स्वर्णमय-कण्ठहारस्य क्रयणनिमित्तम् अस्ति इति तिरुमलः एकः एव जानाति स्म । यतः तिरुमलः पुत्र्याः विवाहार्थं नगरात् सुवर्णस्य कण्ठहारं क्रीतवान् आसीत् । अतः नगरं

प्रति गमनसमये भरणः तिरुमलं विश्वासेन 'सुवर्णस्य कण्ठहाराः कुत्र लभ्यन्ते ?' इति पृष्टवान् आसीत् । आवयोः कृते अपि कण्ठहारद्वयम् आवश्यकम् आसीत् । वञ्चकस्य समीपे अपि कण्ठहारद्वयमेव आसीत् । एवं तर्हि तिरुमलः एव एतस्य वञ्चनानाटकस्य सूत्रधारः स्यात् । यतो हि ग्रामे सर्वे अपि तं वञ्चकं मन्यन्ते' इति चिन्तयन् ग्रामाध्यक्षस्य समीपं गत्वा तस्य पुरतः समग्रं वृत्तान्तं निवेदितवान् शरणः । तिरुमलस्य विषये सन्देहं प्रकटितवान् अपि ।

ग्रामाध्यक्षः अपि बहुभ्यः दिनेभ्यः प्रतीक्षमाणः आसीत् यत् तिरुमलस्य वञ्चना सर्वेषां पुरतः प्रकटीकरणीया इति । अतः शरणः ग्रामाध्यक्षः च मिलित्वा तिरुमलं ग्रहीतुम् एकम् उपायं कृतवन्तौ । ग्रामाध्यक्षः तिरुमलस्य व्यवहारं परीक्षितुं गूढचरौ नियोजितवान् । रात्रौ तिरुमलः यदा मित्रैः सह मिलित्वा धनं विभज्य स्वीकुर्वन् आसीत् तदा गूढचराभ्यां बन्धितः अभवत् ।

तिरुमलः तु ''क्षन्तव्यः अहम्'' इति ग्रामाध्यक्षं बहुधा प्रार्थितवान् । शरणः भरणः च नष्टं धनं प्राप्य सन्तोषेण स्वगृहं गतवन्तौ ।

इदानीम् अपि शरणस्य गृहं प्रथमं प्राप्तम् । समग्रं वृत्तान्तं ज्ञात्वा शरणस्य पत्नी - ''भवतः बुद्धिमत्ता श्लाघनीया एव । ततः एव अपहृतं धनम् अपि पुनः प्राप्तम्'' इति वदन्ती पत्युः श्लाघनं कृतवती ।

ततः भरणः गृहम् आगत्य - 'पत्न्या पत्युः श्लाघनं क्रियते चेत् तस्य बुद्धिमत्ता प्रकाशिता भविष्यति इत्येषः विषयः सोदाहरणं वक्तव्यः' इति चिन्तयन् प्रवृत्तं सर्वम् आदौ निवेदितवान् । तावता तस्य पत्नी - ''प्रवृत्तं सर्वम् अहं ज्ञातवती । शरणस्य पत्नी तं श्लाघितवती । तथापि सः स्वस्य बुद्धिमत्तायाः वर्धनार्थम् उद्युक्तः अभवत् । अहं भवन्तं तर्जितवती । किन्तु भवान् तु कोपेन इतः उत्थाय प्रतीकारेच्छां सर्वथा परित्यज्य खेदेन कोणे उपविष्टवान् । अस्मिन् जन्मनि भवतः बुद्धिः न वर्धिष्यते'' इति तं निन्दितवती ।

पत्न्याः निन्दनं श्रुत्वा अपि भरणः कोपं खेदं वा अप्राप्य - 'मम पत्नी सत्यम् एव उक्तवती । अतः मया शरणात् बहु ज्ञातव्यम् अस्ति' इति निश्चितवान् ।





# विचित्रा परीक्षा

वीरपुरं नाम किञ्चन राज्यम् । तत् राज्यं वीरसेनः नाम कश्चन महाराजः पालयति स्म । धर्मसागरः तस्य मन्त्री । धर्मसागरः तु वयोवृद्धः ज्ञानवृद्धः च ।

अथ एकदा मन्त्री धर्मसागरः - 'मन्त्रि-पदवीतः निवृत्तिं प्राप्य अवशिष्टं जीवनं शान्त्या निश्चिन्ततया च यापनीयम्' इति चिन्तयन् महाराजं विषयं निवेदितवान् । तदा महाराजः मन्त्रिणः प्रस्तावम् अङ्गीकृत्य अवदत् - "अमात्यवर्य ! भवतः त्रयः पुत्राः सन्ति खलु ? तेषु ज्येष्ठं मन्त्रिस्थाने नियोजयिष्यामि । अत्र भवतः सम्मतिः अस्ति खलु ?" इति ।

महाराजस्य वचनं श्रुत्वा मन्त्री उक्तवान् - "प्रभो ! ज्येष्ठस्य एव मन्त्रिस्थाने नियोजनम् इति चिन्तनं मास्तु । तेषु त्रिषु यः भवते रोचते तं मन्त्रिपदे नियोजयतु । कः मन्त्रिपदं प्राप्तुं योग्यः इति भवता सम्यक् चिन्तयित्वा निर्णयः करणीयः इति मम प्रार्थना । भवते धैर्यवान् आवश्यकः चेत् मम ज्येष्ठपुत्रं, बुद्धिशाली चेत् मम द्वितीयं पुत्रं, सत्यवादी आवश्यकः चेत् तृतीयं च भवान् मन्त्रिपदे नियोजयितुम् अर्हति । त्रयः अपि विभिन्नान् गुणान् प्राप्तवन्तः सन्ति" इति ।

तदा महाराजः आश्चर्येण पृष्टवान् - "पुत्राणां स्वभावं कथं भवान् एतावत् स्पष्टं वक्तुं शक्नोति ? स्वस्य एतम् अभिप्रायं किं भवान् प्रमाणीकर्तुं शक्नुयात् ?" इति ।

"कुतो न ? अहं मम पुत्राणां कृते एकां सूचनां ददामि । कः कथं तां सूचनां पालयिष्यति इति भवान् परिशीलयतु । ततः एकैकस्य अपि स्वभावः भवता स्वयं ज्ञायते" इति उक्तवान् मन्त्री ।

अपरस्मिन् दिने मन्त्री त्रीन् पुत्रान् अपि आहूय - "पुत्राः ! भवद्भिः एकं प्रमुखं कार्यं करणीयम् अस्ति । जागरूकतया मम



आत्मनियन्त्रणं साधितं चेत् महान् विजयः साधितः इव । सः एव चिरस्थायिन्याः प्रसन्नतायाः आधारः । – श्रीमाता

वचनानि शृण्वन्तु । राजोद्याने एकं महत्त्वपूर्णं पाटलपुष्पसस्यम् अस्ति । तस्मात् सस्यात् भवन्तः त्रयः अपि एकैकं पुष्पम् आनयन्तु । एतत् बहु कष्टकरं कार्यम् । यतः तस्मात् सस्यात् पुष्पस्य उत्पाटनं निषिद्धम् । पुष्पस्य उत्पाटनं भटैः दृष्टं चेत् ते उत्पाटयितारं गृह्णन्ति । यदि भवन्तः भटैः गृहीताः स्युः तर्हि भवद्भिः मुखमात्रम् उपयुज्य ततः बहिः आगन्तव्यम् । अन्यस्य कस्यापि उपयोगः न करणीयः'' इति उक्तवान् ।

त्रयः अपि तस्य वचनम् अङ्गीकृत्य पितरं नमस्कृत्य ततः निर्गतवन्तः । महाराजः समीपतः एव एतत् सर्वं पश्यन् आसीत् ।

सायङ्कालः अभवत् । त्रयः अपि रहस्येन उद्यानं प्रविष्टवन्तः । पाटलसस्यस्य समीपं गतवन्तः च । पुष्पस्य स्वीकरणानुक्षणम् एव रक्षकभटाः त्रीन् अपि गृहीतवन्तः ।

ज्येष्ठः उच्चैः आक्रन्दनं कुर्वन् एकस्य भटस्य हस्तं दन्तैः दष्टवान् । तस्य दंशनात् भीतः भटः हस्तं त्यक्तवान् । एषः एव सुसमयः इति मत्वा ज्येष्ठपुत्रः ततः पलायनं कृतवान् ।

द्वितीयः तु पुष्पं मुखे स्थापयित्वा किमपि न प्रवृत्तम् इव अभिनयन् ततः बहिः गतवान् ।

किन्तु तृतीयः शान्तरूपेण तथैव स्थितवान् । रक्षकभटाः तं महाराजस्य समक्षं नीतवन्तः । सः महाराजं नमस्कृत्य उक्तवान् – ''प्रभो ! तस्मात् सस्यात् पुष्पस्य उत्पाटनं निषिद्धम् अस्ति इति अहं जानामि । परन्तु तत् कार्यं कर्तुं परमविवेकी भवतः मन्त्री एव उक्तवान् । तस्य विशेषकारणं स्यात् एव । अतः तस्मात् सस्यात् एकं पुष्पं दातव्यम् इति विनयेन प्रार्थये'' इति ।

तावति काले तत्र आगतः मन्त्री महाराजम् उद्दिश्य – ''प्रभो ! एतत् सर्वं दृष्टवान् खलु भवान् ! त्रयः अपि मुखमात्रस्य एव उपयोगं कृतवन्तः । किन्तु तेषां स्वभावानुसारं तेषां व्यवहारः आसीत् । एकेन हिंसार्थम्, अपरेण बुद्धेः उपयोगार्थं, तृतीयेन च सत्यपरिपालनार्थं तस्य उपयोगः कृतः'' इति उक्तवान् ।

तदा महाराजः सन्तोषेण स्मितवदनः सन् उक्तवान् – ''अमात्यवर्य ! भवतः त्रयः अपि पुत्राः श्रेष्ठाः एव । ज्येष्ठपुत्रं सैन्याधिकारि-रूपेण, द्वितीयं मम आप्तसहायकत्वेन, विवेकशालिनं सत्यशीलं तृतीयं पुत्रम् एव मन्त्रित्वेन च नियोजयिष्यामि ।'' इति ।



५०. विश्वरूपप्रदर्शनम्

# महाभारतम्

धृतराष्ट्राय कृष्णः दिव्यदृष्टिं दत्तवान् । तद्द्वारा धृतराष्ट्रः कृष्णस्य विश्वरूपं दृष्टवान् । ततः सः कृष्णम् अवदत् - "भगवन् ! भवतः कृपया मया दिव्यदृष्टिः प्राप्ता । एतां प्रतिप्राप्नोतु कृपया । यया दृष्ट्या मया भवतः विश्वरूपं दृष्टं तया एतं निकृष्टं प्रपञ्चं, स्वार्थपरान् मानवान् च द्रष्टुं न इच्छामि" इति ।

अनन्तरक्षणे सभाभवनं पूर्ववत् जातम् । कृष्णः अपि साधारणरूपवान् जातः । ततः सः सभायां स्थितानाम् ऋषीणाम् अनुज्ञां प्राप्य विदुरं सात्यकिं च एकैकेन हस्तेन अवलम्बमानः सभाभवनतः निर्गतवान् । तेनैव सह अन्ये राजानः कौरवाः चापि निर्गताः । सभाभवनस्य द्वारसमीपे दारुकः रथं सज्जीकृत्य स्थितः आसीत् । कृष्णः यदा रथे उपविष्टः तदा धृतराष्ट्रः अवदत् - "कृष्ण, भवता अन्यथा न ग्रहणीयम् । पाण्डवानां विषये मम कोऽपि द्वेषः नास्ति । भवत्पुरतः एव मया दुर्योधनः बोधितः । सभासदः अपि तत् दृष्टवन्तः सन्ति" इति ।

अनन्तरं कृष्णः धृतराष्ट्र-भीम-द्रोण-बाह्लीक-कृपादीन् ज्येष्ठान् उद्दिश्य अवदत् - "महात्मानः ! सभायां किं किं प्रवृत्तम् इति भवद्भिः दृष्टम् एव । दुर्योधनः क्रोधेन सभातः निर्गतः । धृतराष्ट्रः स्वस्य असहायकतां दर्शितवान् । मया यदर्थम् आगतं तत् कार्यं समाप्तम् । अहं युधिष्ठिरसमीपं गच्छन् अस्मि । कृपया अनुज्ञायताम्" इति । सर्वे राजानः कृष्णस्य अनुज्ञां प्राप्य ततः निर्गतवन्तः ।

कृष्णः ततः कुन्तीसमीपं गतवान् । कुन्तीं सन्धिप्रयत्नस्य वृत्तान्तं श्रावयित्वा सः अवदत् - "देवि ! सर्वे दुर्योधनं बहुधा हितं





बोधितवन्तः । किन्तु दुर्योधनः सर्वेषां वचनं तृणीकृतवान् । तस्य व्यवहारतः ज्ञायते यत् तदीयाः अन्तिमक्षणाः सन्निहिताः इति । अर्जुनः दवाग्निः इव तान् भस्मसात्करिष्यति । अहं पाण्डवानां समीपं गच्छन् अस्मि । किं भवती कमपि सन्देशं प्रेषयितुम् इच्छति ?'' इति ।

तदा कुन्ती उक्तवती - ''वत्स ! धर्मराजः मद्वचनैः वक्तव्यः यत् धर्ममार्गः न परित्यक्तव्यः इति । बाहुबलेन जीवनं क्षत्रियाणां धर्मः । तदर्थं हिंसा यदि सम्मुखीकरणीया भवेत् तर्हि तदपि सम्मतम् एव स्यात् । मंया श्रुतं यत् पूर्वं कुबेरः मुचुकुन्दनामकाय राजर्षये समस्तं भूमण्डलं दातुम् इष्टवान् आसीत् इति । तदा मुचुकुन्दः भूमिस्वीकारं निराकुर्वन् उक्तवान् आसीत् - 'यत् राज्यं मया बाहुबलेन जीयते तदेव पर्याप्तं मह्यम्' इति । एतदवसरे युधिष्ठिरः यादृशं चिन्तनं कुर्वन् अस्ति तत् सर्वथा असम्मतं मम । तादृशं चिन्तनं पाण्डुभीष्मादिभिः क्रियेत, न तु युधिष्ठिरादिभिः । भिक्षाटनं, वाणिज्यं कृषिः, इत्यादयः वृत्तयः क्षत्रियस्य न शोभावहाः । धर्ममार्गेण राज्यपालनं क्षत्रियाणां धर्मः । अतः पाण्डवैः दायभागभूतं राज्यम् अवश्यं प्रतिप्राप्तव्यम् । इतोऽपि कियन्ति दिनानि मया अन्याश्रये जीवनीयम् ? पराधीनतया जीवनं स्वाभिमानवतां सम्मतं सर्वथा न । अतः युधिष्ठिरः भवता वक्तव्यः यत् युद्धं कृत्वा पितृपितामहादीनां सद्गतिः उपकल्पनीया इति । युधिष्ठिरः क्षत्रियोचितं व्यवहारं कुर्यात् इत्येव मम अपेक्षा'' इति ।

कृष्णः कुन्त्याः भवनतः निर्गत्य कौरवप्रमुखाणाम् अनुज्ञां प्राप्य सात्यकिकर्णाभ्यां सह रथम् आरूढवान् । मध्येमार्गं भोजनानन्तरं निर्जने प्रदेशे एकान्ते कृष्णः कर्णम् अवदत् - ''कर्ण ! भवता वेदधर्मशास्त्रादयः अधीताः । अतः मया उच्यमानस्य अवगमने भवतः क्लेशः न भवेत् । कन्यागर्भतः उत्पन्नः कानीनः इति उच्यते । सा कन्या यं परिणयति सः एव पिता भवति कानीनस्यापि । भवान् कुन्तीगर्भात् कानीनपुत्रत्वेन उत्पन्नः । अतः भवान् पाण्डोः ज्येष्ठः पुत्रः । पितृकुलसम्बन्धितया पाण्डवाः, मातृकुलसम्बन्धितया वृष्णि-

वंशीयाः च भवतः बान्धवाः । यदि भवान् मया सह आगच्छेत् तर्हि सर्वे पाण्डवाः, तत्पक्षीयाः राजानः च भवन्तं सादरं प्रणमेयुः । भवतः एव राज्याभिषेकः अपि स्यात् । भवान् यदि राज्याधिकारं प्राप्नुयात् तर्हि कुन्ती प्रसन्ना भवेत्'' इति ।

तदा कर्णः अवदत् - ''कृष्ण ! भवता मद्विषयकाभिमानेन यत् उक्तं तत् श्रुतं मया । अहं पाण्डुराजस्य पुत्रः इत्यत्र नास्ति सन्देहः । यदा कुन्तीदेवी मह्यं जन्म दत्त्वा नद्यां क्षिप्तवती तदा अतिथिनामकः दाशः मां प्राप्य स्वपत्न्यै राधायै दत्तवान् । तौ दम्पती महत् कष्टम् अनुभवन्तौ अपि मां पोषितवन्तौ । वसुषेणः इति मम नाम कृतवन्तौ तौ । तत्परिवारीया काचित् कन्या मया परिणीता अपि । इदानीं मम पुत्र-पौत्रादयः सन्ति । एवम् अहं तयोः परिवार-सदस्यः अस्मि । या पोषितवती सा जन्मदात्रीतः अपि श्रेष्ठा । अतः राधा एव मम माता । कुन्ती जन्ममात्रं दत्तवती स्यात् । किन्तु मातृत्वस्य कर्तव्यं तु न निरूढवती । अन्यच्च कुन्ती अद्यावधि मां न दृष्टवती अपि । यतः तस्याः अन्ये पञ्च पुत्राः सन्ति । राधायाः तु अहम् एकः एव पुत्रः । किम् अहं मातुः विषये कृतघ्नताम् आचरेयम् ? कीदृशः अयम् उपदेशः भवतः ?

गतेषु त्रयोदशसु वर्षेषु अहं दुर्योधनस्य आस्थाने राजभोगं प्राप्तवान् । मम समर्थनं प्राप्य एव दुर्योधनः पाण्डवान् विरुध्य युद्धम् उद्घोषितवान् अस्ति । अर्जुनः मया एव संहरणीयः इति तस्यापि इच्छा । एतादृशे



अवसरे भयेन लोभेन वा यदि अहं दुर्योधनस्य पक्षं परित्यजेयं तर्हि किं मां न निन्देत् लोकः ? दुर्योधनविषये अहं नितरां कृतज्ञः अस्मि इति भवान् अपि जानाति एव । यदा सर्वे माम् उपेक्षया पश्यन्ति स्म तदा दुर्योधनेन आश्रयः दत्तः । तत्समये अपि भवान् मम जन्मरहस्यं जानाति स्म एव । कुतो वा तदा भवता तत् न प्रकाशितम् ? अद्य अहं यादृशः अस्मि तस्य कारणं - राधा दुर्योधनश्च । किम् अहं तयोः विषये विश्वासघातम् आचरेयम् ? भवतः साहाय्यं प्राप्य पाण्डवाः निश्चयेन विजयशालिनः भवेयुः । यदि अहम् अग्रजः इति युधिष्ठिरः जानीयात् तर्हि सः राज्यं न स्वीकुर्यात् । यदि मया समग्रस्य जगतः एव



आधिपत्यं प्राप्यते तर्हि अपि अहं तत्सर्वं दुर्योधनस्य एव पदतले अर्पयिष्यामि । अतः युधिष्ठिरः एव समग्रायाः पृथिव्याः शासकः भवतु नाम । अर्जुनं वदतु यत् मया सह युद्धार्थं योग्यसन्नाहः करणीयः इति ।''

ततः कृष्णः हसन् उक्तवान् - ''भवतः तु राज्याकाङ्क्षा नास्ति । युद्धं तु निश्चितम् एव । सप्ताहाभ्यन्तरे तत् आरब्धं भवेत् अपि । भीष्म-द्रोण-कृपाचार्यादीन् वदतु यत् युद्धसन्नाहः क्रियताम् इति । भवान् अपि युद्धाय सन्नद्धः भवतु'' इति ।

एतदनन्तरं कर्णः कृष्णम् आलिङ्ग्य तदीयाम् अनुज्ञां प्राप्य ततः निर्गतवान् ।

कृष्णस्य निर्गमनस्य अनन्तरं विदुरः कुन्त्याः समीपं गत्वा अवदत् - ''मया यथा ऊहितं तथैव प्रवर्तमानम् अस्ति सर्वम् अपि । कौरवपाण्डवयोः युद्धं लक्षशः जनानां प्राणहरणस्य कारणं भविष्यति । सन्ध्यर्थम् आगतः कृष्णः तु असफलतां प्राप्य प्रतिगतः'' इति ।

युद्धे भीष्मद्रोणादीनां मरणं नितरां घोरम् अप्रियं च इति कुन्ती अपि भावयति स्म । 'ज्ञानिनां वधात् यत् राज्यं प्राप्येत तस्य उपभोगात् अपि अकिञ्चनत्वेन जीवनम् अपि वरम् एव स्यात् । एतस्य सर्वस्य पृष्ठ-भूमिकायां कर्णस्य पात्रं सुमहत् अस्ति । सः पाण्डवानां मारणं सङ्कल्प्य दुर्योधनं युद्धार्थं प्रेषयन् अस्ति । तस्य मनः कथञ्चित् परिवर्तितं चेत् युद्धभीतिः अपगता स्यात् अपि' इति विचिन्त्य कुन्ती गङ्गातीरं गतवती, यत्र कर्णः जपं करोति स्म ।

जपसमाप्त्यनन्तरं कर्णः उपस्थितां कुन्तीं दृष्ट्वा अपृच्छत् - ''अम्ब ! एषोऽहं कर्णः अभिवादये । केन उद्देशेन अत्र आगता भवती ? मत्तः किं किमपि साहाय्यम् अपेक्ष्यते भवत्या ?'' इति ।

''वत्स ! भवान् मम पुत्रः, न तु राधायाः । वस्तुतः भवान् न सूतवंशीयः । भ्रातॄणां सहवासात् वञ्चितः अस्ति भवान् । दुर्योधनस्य निमित्तं पापकार्याणि क्रियमाणानि सन्ति भवता । अर्जुनः स्वशक्त्या यानि राज्यानि जितवान् तानि उपायेन वशीकृतवान् अस्ति दुर्योधनः । धृतराष्ट्रपुत्रेभ्यः तानि राज्यानि प्रतिप्राप्य भवान् चक्राधिपतिः भवतु । बलरामकृष्णौ इव भवान् अपि अर्जुनस्य प्रियः भवतु ।

भवान् अर्जुनश्च यदि सङ्गतौ भवतः तर्हि भवन्तौ जेतुं कोऽपि न शक्नोति । भवद्भ्यां साधयितुम् असाध्यम् अपि किमपि न भविष्यति'' इति उक्तवती कुन्ती ।

एतत् श्रुत्वा कर्णः अवदत् - ''अम्ब ! भवत्याः वचनं अङ्गीकारार्हं सर्वथा नास्ति । मद्विषये भवत्या तादृशं महत् पापम् अनुष्ठितं, यच्च शत्रुणा अपि न क्रियते । उत्पन्नं मां जले क्षिप्तवती भवती । क्षत्रिय-कुले जातोऽपि अहं सूतगृहे प्रवृद्धः । अद्यावधि अहं जीवामि वा न वा इत्यपि न विचारितं भवत्या । किन्तु अद्य स्वार्थहेतुना मां बोधयितुम् उपस्थिता भवती । एतदवसरे यदि अहं पाण्डवपक्षम् आश्रयेयं तर्हि जनाः मां भीरुं वदेयुः । युद्धं तु घोषितप्रायम् । इदानीम् अहं मां यदि पाण्डवभ्रातरं वदेयं तर्हि सर्वे राजानः किं माम् न उपहसेयुः ? धृतराष्ट्रपुत्राः मह्यम् आश्रयं दत्तवन्तः, माम् आदरेण दृष्टवन्तः च । किमहं तेषां विषये कृतघ्नताम् आचरेयम् ? मम शक्तिम् अपि परिगणय्य युद्धं निश्चितम् अस्ति । प्राणान् पणीकृत्य मया प्रत्युपकारः करणीयः । अतः अहं मत्पुत्राः च दुर्योधनसहायकत्वेन एव युद्धं करिष्यामः। पुत्रमरणभीत्या भवती मत्समीपम् आगता अस्ति । भवतीं पूर्णतः निराशां कर्तुं न इच्छामि । अर्जुनात् ऋते पाण्डवेषु अन्यं कमपि न संहरिष्यामि । अर्जुनस्य संहारः तु मया क्रियते एव । तदा एव मम शक्तेः सार्थकता । यदि युद्धे अहम् अर्जुनं संहरेयं तर्हि अपि भवती पञ्चपुत्रवती स्थास्यति एव । यतः पञ्चमः अहं जीवितः




भविष्यामि तदा । यदि अर्जुनः मां मारयेत् तर्हि अपि पञ्चपुत्रत्वस्य न काऽपि हानिः । भवत्याः षट्पुत्रत्वं तु न सम्भवति'' इति ।

कुन्ती अश्रूणि स्रावयन्ती कर्णम् आलिङ्ग्य - ''वत्स ! कौरवाणां नाशः स्यात् इति तु विधिसङ्कल्पः । 'चतुर्णां भ्रातॄणां संहारः न क्रियते' इति यत् भवता प्रतिज्ञातम् तत् कदापि न विस्मर्तव्यम् । कीर्तिमान् भव'' इति उक्तवती । कर्णः कुन्तीं साष्टाङ्गं प्रणम्य ततः निर्गतवान् । कुन्ती अपि स्वनिवासं गतवती ।

हस्तिनापुरतः उपप्लव्यम् आगतः कृष्णः पाण्डवान् प्रवृत्तं समग्रं निवेदितवान् । पाण्डवाः महता कुतूहलेन कृष्णस्य आगमनं प्रतीक्षमाणाः आसन् । कृष्णः दुर्योधनस्य

उद्धतव्यवहारं, धृतराष्ट्रस्य कपटतां, कुन्त्याः मनःक्लेशान् च विस्तरेण उक्तवान् । कर्णेन सह एकान्ते यः वार्तालापः प्रवृत्तः तम् अपि युधिष्ठिरम् उक्तवान् सः । द्रोण-कृप-भीष्म-पितामहादीनाम् असहायकता अपि तेन कथिता । ततः युद्धनीतिविषये सर्वे सम्भूय समालोचनं कृतवन्तः । तदनन्तरं कृष्णः विश्रान्त्यर्थं स्वनिवासं गतवान् ।

रात्रौ पुनः युद्धसन्नाहविषये चर्चा प्रवृत्ता । पाण्डवानां सैन्ये सप्त अक्षोहिणी आसीत् । एकैकस्याः अक्षोहिण्याः एकैकः सेनापतिः निश्चितः । विराटः, द्रुपदः, धृष्टद्युम्नः, भीमः, शिखण्डी, सात्यकिः, चेकितानः च सेनापतित्वेन नियुक्ताः ।

''एतेषु सप्तसु महासेनापतिः कः भवेत् ? महासेनापतिः भीष्मसदृशः समर्थः भवेत्'' इति उक्तवान् धर्मराजः । तदा सहदेवः विराटस्य नाम सूचितवान् । नकुलः द्रुपदस्य, अर्जुनः धृष्टद्युम्नस्य, भीमः शिखण्डिनः च नाम सूचितवन्तः । तदा युधिष्ठिरः उक्तवान् यत् कृष्णः यत् नाम सूचयति तदेव अङ्गीकरवाम इति । कृष्णः धृष्टद्युम्नस्य नाम सूचितवान् ।

धृष्टद्युम्नः महासेनापतित्वेन चितः इति वार्ता यदा प्रसृता तदा पाण्डवसैन्ये आनन्द-तरङ्गाः प्रसृताः । शङ्खाः दुन्दुभयः च वादिताः । समुद्रोपमा पाण्डवसेना ततः प्रस्थिता । सेनायाः अग्रभागे भीमः, नकुलः, सहदेवः च आसन् । अभिमन्युः, उपपाण्डवाः, धृष्टद्युम्नः, पाञ्चालाः च तान् अनुसृतवन्तः । सेनायाः मध्यभागे युधिष्ठिरः आसीत् । विविधानि वाहनानि, आयुधसङ्ग्रहः, वैद्याः, परिचारकाः चापि सेनायाम् आसन् । द्रौपदी दासदासीभिः सह उपप्लवे एव स्थितवती ।

पाण्डवाः प्रस्थानात् पूर्वं गो-सुवर्णादीनां दानेन ब्राह्मणान् सन्तोष्य तेषाम् आशीर्वादं प्राप्तवन्तः । सेनायाः पृष्ठभागे विराटः, कुन्तिभोजः, धृष्टद्युम्नपुत्रः, चेकितानः, धृष्टकेतुः, सात्यकिः, कृष्णः, अर्जुनः च प्रस्थितवन्तः । सेनायां चत्वारिंशत्सहस्रं रथाः, द्विलक्षमिताः गजाः, पञ्चलक्षमिताः पदातयः, षष्टिसहस्राधिकाः अश्वाः च आसन् । महासेना एषा कुरुक्षेत्रं प्राप्य शङ्खोद्घोषं कृतवती । सैनिकाः परमानन्दिताः सन्तः सिंहनादेन दिशः आपूरितवन्तः ।





# योग्यः निर्णयः

पूर्वं गौतमीनदीतीरे धनगुप्तः नाम निर्धनः निवसति स्म । धनसम्पादनार्थं तेन विविधाः प्रयत्नाः कृताः । किन्तु ते सर्वे असफलाः । अतः सः नितरां निराशः सन् आत्महत्यया इहलोकव्यवहारं समापयितुम् इच्छन् कस्याञ्चित् नद्यां पतितवान् ।

तत्समये तेन मार्गेण गच्छन् कश्चन संन्यासी तं दृष्ट्वा करुणां प्राप्य झटिति नदीम् अवतीर्य तरन् गत्वा तं रक्षितवान् । "किमर्थम् एवं मरणार्थं प्रयत्नः क्रियते भवता ? किं कष्टं भवतः ? आत्महत्या पापाय इति किं भवान् न जानाति ?" इति पृष्टवान् च ।

तदा धनगुप्तः – "आत्महत्या पापाय इति अहं जानामि । किन्तु जीवनार्थं यस्य मार्गः एव नास्ति तस्य जीवनात् को वा लाभः ? अतः मया आत्महत्यासङ्कल्पः कृतः आसीत् । किन्तु सः भगवतः प्रियः न आसीत् इति मन्ये । अतः भगवान् भवद्द्वारा मां रक्षितवान् । ततः मम जीवने पुनरपि कष्टम् आपतितम्" इति खेदेन अवदत् ।

तदा संन्यासी तस्मै एकं तायकं दत्त्वा – "भोः, अलं चिन्तया । एतत् धृतं चेत् भवान् धनिकत्वं प्राप्स्यति । ततः भवतः समस्या परिहृता स्यात्" इति उक्त्वा ततः निर्गतवान् ।

संन्यासिना दत्तस्य तायकस्य प्रभावतः, उत दैवानुग्रहकारणतः, अथवा आत्मविश्वासस्य कारणतः इति तु न ज्ञायते, धनगुप्तः धनसम्पादनम् आरब्धवान् । सर्वत्र लाभं प्राप्य प्रभूतं धनं सम्पाद्य सः अल्पे एव काले महाधनिकः जातः । योग्या कन्या तेन परिणीता । पुत्रः अपि जातः । निश्चिन्ततया तस्य दिनानि यापितानि भवन्ति स्म ।

तस्य कृषिः, वाणिज्यं, वाहनानि, धनम् इत्यादीनि महता प्रमाणेन आसन् । अतः सः एतस्य सर्वस्य परिशीलनार्थम् धर्मदेवनामकम् एकं सहायकं स्वीकृतवान् ।

**पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा**

दौर्भाग्यवशात् धनिकस्य पत्नी दिवं गता। ततः केषाञ्चित् मासानाम् अनन्तरं धनिकः अपि अस्वस्थः जातः। 'मम मरणं सन्निहितम्' इति अवगत्य धनिकः ग्रामप्रमुखान् मेलयित्वा एकं मरणशासनं लेखितवान्।

तत्र तेन एवं लेखितम् - 'मम मरणानन्तरं मदीयः सहायकः धर्मदेवः सम्पत्तिभूम्यादीनां रक्षणं करिष्यति। यदा मम पुत्रः प्राप्तवयस्कः भविष्यति तदा धर्मदेवः आत्मना यत् इष्यते तत् मत्पुत्राय दत्त्वा अवशिष्टं स्वयं स्वीकर्तुम् अर्हति' इति।

एतत् मरणशासनं पठित्वा ग्रामज्येष्ठाः आश्चर्यं प्राप्तवन्तः। धर्मदेवः तु नितरां सन्तुष्टः। सः चिन्तितवान् यत् मरणकाले मम स्वामिनः मतिभ्रमः जातः स्यात् इति।



ततः सप्ताहाभ्यन्तरे धनगुप्तः इहलोकव्यापारं समापितवान्। धर्मदेवः धनगुप्तपुत्रस्य पोषणे कामपि न्यूनतां न कृतवान्। योग्यां विद्याभ्यासव्यवस्थां कृत्वा उत्तमान् संस्कारान् अपि दत्तवान् सः। तस्य चिन्तनम् आसीत् - 'धनगुप्तपुत्राय मया धनं व्ययीक्रियते चेत् तस्य विकासार्थं प्रयत्नः क्रियते चेच्च सर्वे मम प्रशंसां कुर्वन्ति। धनगुप्तस्य मरणशासनं मदनुकूलम् एव अस्ति इत्यतः एषा सम्पत्तिः मदधीना एव भविष्यति इति तु निश्चितम्। यदि धनगुप्तपुत्रः कथञ्चित् दुष्टः भवेत् तर्हि सः प्रौढत्वप्राप्तेः अनन्तरं बलप्रयोगेण सम्पत्तिं स्वायत्तीकर्तुं प्रयत्नं कुर्यात्। अतः सः उत्तमः जनः भविष्यति चेदेव मम लाभः' इति।

प्रौढत्वं प्राप्तवान् धनगुप्तपुत्रः कदाचित् धर्मदेवम् उक्तवान् - 'पित्रा यथा सूचितं तथा सम्पत्तिं मह्यम् अर्पयतु' इति।

धर्मदेवः एकं तायकं तस्मै दत्त्वा - "एतस्य साहाय्येन एव भवतः पिता एतत्सर्वं सम्पादितवान्। अतः पैतृकसम्पत्तिरूपेण एतत् भवान् स्वीकरोतु। अवशिष्टं सर्वं ममैव" इति उक्तवान्।

"एतत् तु अन्याय्यम्। मम पितुः समग्रसम्पत्तेः उत्तराधिकारी भवान् कथं भवितुम् अर्हति ? अहं खलु पैतृकसम्पत्तेः उत्तराधिकारी ?" इति अपृच्छत् धनगुप्तपुत्रः।

"भवतः पित्रा मरणशासने यथा लिखितं तथा मया कृतम्। अहं यावत् दातुम् इच्छामि तावत् ददामि। पश्यतु भवान् एव भवतः पित्रा लिखितं मरणपत्रम्" इति उक्त्वा मरणपत्रं दर्शितवान्।



***यदा जीवने कष्टानि सम्मुखीकरणीयानि भवन्ति, तदा एषा अपि भगवत्कृपा इति चिन्तनीयम् । तेन वस्तुतः अपि भगवत्कृपा प्राप्ता भविष्यति ।***

***– श्रीमाता***

धर्मदेवतः पितुः मरणपत्रं प्राप्य धनगुप्त-पुत्रः ग्रामाधिकारिणः समीपं गतवान् । प्रवृत्तं सर्वम् उक्त्वा – ''न्याय्या पैतृकी सम्पत्तिः मया यथा प्राप्येत तथा उपक्रियताम्'' इति प्रार्थितवान् ।

ग्रामाधिकारी मरणशासनं जागरूकतया पठित्वा धर्मदेवम् आनाय्य – ''किं भोः, एषः प्रौढत्वं प्राप्तवान् अस्ति । एतेन या पैतृकसम्पत्तिः प्राप्तव्या सा भवता कुतः न दीयते ?'' इति अपृच्छत् ।

''मया 'न दीयते' इति कदापि न उक्तम् । मरणपत्रे यथा लिखितं तथैव आचरितं मया । तायकस्य आधारेण धनगुप्तवर्यः प्रभूतं धनं सम्पादितवान् । अतः पवित्रं तदेव तस्मै दत्तं मया । यत् इष्यते तत् दातुं मम अधिकारः अस्ति एव'' इति अवदत् धर्मदेवः ।

''ऋते तायकात् अवशिष्टं सर्वम् इष्यते खलु भवता ?'' इति अपृच्छत् ग्रामाधिकारी ।

''आम् । तायकं तु धनगुप्तपुत्रीयम् । अवशिष्टं मया इष्यते एव'' इति ससन्तोषम् उक्तवान् धर्मदेवः ।

''युक्तम् एतत् । भवान् तत् तायकमात्रं स्वीकरोतु । यत् इष्यते तत् दातव्यम् इति मरणपत्रे स्पष्टं लिखितम् अस्ति । तदनुगुणं व्यवहरणं भवता अङ्गीकृतम् । भवता तावत्, तायकात् ऋते सर्वम् इष्यते । अतः तत्सर्वं भवता धनगुप्तपुत्राय दातव्यम् । एषः एव मरणपत्रस्य आशयः'' इति निर्णयं श्रावितवान् ग्रामप्रमुखः ।

धर्मदेवस्य मुखं विच्छायं जातम् । मृत्युपत्रं पुनः पठितं तेन । 'तत्रत्यवाक्यानां तात्पर्यम् एवम् अपि भवितुम् अर्हति' इति अवगतवान् सः । अतः अनन्यगतिकतया समग्रां सम्पत्तिं धनगुप्तपुत्राय दत्त्वा देशान्तरं गतवान् सः ।





# सहचारी ज्येष्ठगोपालः

गोपालः निर्धनविधवायाः अल्पवयस्कः पुत्रः । तेन बाल्ये एव पितृवियोगः प्राप्तः आसीत् । गृहस्य पृष्ठतः अल्पा भूमिः आसीत् । तत्र गोपालस्य माता शाकान् वर्धयति स्म ।

तस्याः गृहे तन्तुनिर्माणयन्त्रम् आसीत् । वणिक् कश्चित् तस्यै कार्पासं ददाति स्म । ततः सा तन्तुं निर्माय तस्मै ददाति स्म । भृतिरूपेण सा तण्डुलं प्राप्नोति स्म ।

एवं सा विविधैः प्रकारैः अल्पाल्पं धनं सम्पादयन्ती स्वस्य पुत्रस्य च उदरपोषणं करोति स्म ।

व्यक्तिद्वये तस्याः विशेषप्रीतिः आसीत् । प्रीतिपात्रयोः अन्यतरः आसीत् पुत्रः गोपालः । अपरश्च आराध्यदेवः भगवान् गोपालः । तम् अपि पुत्रप्रेम्णा एव पश्यन्ती आराधयति स्म सा ।

गोपालः विद्यालयगमनम् आरब्धवान् । मातुः मनसि आशा आसीत् - मम पुत्रः अक्षराभ्यासादिकं कृत्वा रामायणकथां, महाभारतकथां, पुराणकथाः च पठित्वा मां श्रावयेत् इति ।

अत्रान्तरे बालगोपालेन एका समस्या सम्मुखीकरणीया अभवत् । विद्यालयप्राप्त्यर्थं तेन एकं लघु अरण्यम् अतिक्रमणीयं भवति स्म । वृक्षैः आवृते अरण्यमार्गे तेन एकाकिना गन्तव्यं भवति स्म । एवं गमनसमये सः महतीं भीतिम् अनुभवति स्म ।

पुत्रस्य समस्यां ज्ञात्वा माता धैर्यवचनानि उक्तवती - ''पुत्र ! अलं भीत्या । भवतः अग्रजः कश्चन तस्मिन् अरण्ये निवसति । तस्य नाम अपि गोपालः इत्येव । यदा भीतिः भवति तदा भवान् उच्चैः तम् आह्वयतु । तदा सः निश्चयेन भवतः साहाय्यं करिष्यति'' इति ।

''मया न ज्ञातम् एव आसीत् एतत् ! एकाकितया अरण्ये वसन् सः किं वा करोति ?'' इति कुतूहलेन पृष्टवान् गोपालः ।

''सः तत्र गोपालनं कुर्वन् कालं यापयति । वेणुवादनेन मनः विनोदयति च'' इति उक्तवती माता ।

अनन्तरदिने विद्यालयं प्रति गमनसमये



गोपालः अवधानपूर्वकं परिशीलितवान् - कुतश्चित् वेणुवादनं श्रूयेत वा इति । वस्तुतः तेन वेणुनादः श्रुतः । आरम्भे सः क्षीणः आसीत्, अनन्तरकाले सः स्फुटः जातः । तादृशं सुमधुरनादं सः इतः पूर्वं न श्रुतवान् आसीत् ।

''अये ! गोपालाग्रज ! कुत्र अस्ति भवान् ? अहं भवतः अनुजः वदामि । निर्जने अरण्ये एकाकिताकारणतः भीतिः मम । भवता कुतो वा मया सह न आगन्तव्यम् ?'' इति उच्चस्वरेण अवदत् गोपालः ।

अनन्तरक्षणे एव पृष्ठभागतः नूपुरनादः श्रुतः । किञ्चिज्ज्येष्ठः बालः तस्य पार्श्वे अतिष्ठत् । तौ वार्तालापं कुर्वन्तौ अरण्यम् अतिक्रान्तवन्तौ ।

अरण्यक्रमणस्य अनन्तरं ज्येष्ठगोपालः अवदत् - ''अहं सदा कार्यव्यग्रः भवामि । अतः महती भीतिः यदा भवति तदा माम् आह्वयतु'' इति ।

''भवतः परिचयः अद्य जातः । अतः इतः परम् अत्र मम भीतिः न भवेत् । तथापि अहं तु भवन्तं सदा स्मरामि'' इति मौग्ध्येन अवदत् बालगोपालः ।

''युक्तम् एतत्'' इति मन्दहासपूर्वकं ज्येष्ठगोपालः अवदत् ।

''अरण्यक्रमणसमये मम भीतिः न भवेत् चेदपि एकाकितया गमने नीरसता तु स्यात् एव । अतः यदा मया स्मर्यते तदा किं भवान् मत्समीपम् आगच्छेत्, येन आवां जल्पन्तौ क्रीडन्तौ च सन्तोषेण गन्तुं शक्नुयाव ?'' इति अपृच्छत् बालगोपालः ।

''अस्तु तावत् । भवता सह क्रीडनं ममापि प्रियम् एव । अतः भवता यदा आहूयते तदा अवश्यम् उपस्थितः भविष्यामि'' इति अवदत् ज्येष्ठगोपालः ।

ततः आरभ्य गोपालः प्रतिदिनं ज्येष्ठ-गोपालेन क्रीडनम् आरब्धवान् । अतः घनारण्ये सञ्चारे इदानीं तस्य भीतिः न भवति स्म ।

गोपालः मातरं प्रवृत्तं समग्रं निवेदितवान् । नूतनमित्रस्य प्राप्तिं, तेन सह क्रीडनं चापि सहर्षं निवेदितवान् । एतत् श्रुत्वा सा मुखं परिवृत्य आनन्दाश्रूणि स्रावितवती । आराध्यदेवाय पूर्णमनसा कृतज्ञतां समर्पितवती च ।

कदाचित् आचार्यस्य पितुः श्राद्धदिनम्

आगतम् । तन्निमित्तं सर्वैः च्छात्रैः स्वगृहात् किमपि आनीय दातव्यम् आसीत् । एषा गुरुकुलस्य परम्परा ।

गोपालः स्वगृहस्य दारिद्र्यं जानाति स्म । आचार्याय दातुं योग्यं गृहे किमपि नास्ति इति अवगच्छन् सः मातरं किमपि न उक्तवान् एव । किन्तु तस्य मनसि खेदः तु आसीत् - 'गुरवे किमपि दातुम् असमर्थः छात्रः अहम् एकः एव' इति ।

तस्मिन् दिने अरण्यमार्गे ज्येष्ठगोपालः यथापूर्वं मिलितः । सः बालकस्य गोपालस्य म्लानं मुखं दृष्ट्वा तस्य कारणम् अपृच्छत् । बालगोपालः स्वसमस्यां निवेदितवान् ।

''तदर्थं खेदः किमर्थम् ? अहम् एकं क्षीरपात्रं ददामि । भवान् तदेव गुरवे अर्पयतु'' इति उक्त्वा ज्येष्ठगोपालः एकं क्षीरपात्रं बालगोपालाय दत्तवान् । एतस्मात् बालगोपालः नितरां सन्तुष्टः ।

विद्यालये च्छात्राः आत्मना आनीतानि विविधानि उपायनानि गुरवे अर्पितवन्तः । नारिकेलानि, कदलीफलानि, तण्डुलः, गुडः इत्यादीनि तैः अर्पितानि । केचन धनम् अपि अर्पितवन्तः ।

बालः गोपालः क्षीरपात्रम् अर्पितवान् । गुरुः तत् स्वीकृत्य महापात्रे क्षीरं पातितवान् । किन्तु आश्चर्यं नाम रिक्तीकरणानन्तरं झटिति तत् लघु क्षीरपात्रं क्षीरेण पूर्णम् । गुरुः द्वितीयवारं रिक्तीकृतवान् । तदा अपि तथैव प्रवृत्तम् । पुनः पुनः एषा एव घटना आवृत्ता ।

एषा घटना आचार्ये आश्चर्यम् अजनयत् । सः विवेकी आसीत् । 'एतस्याः घटनायाः



किमपि विशेषकारणम् अस्ति' इति चिन्तयित्वा सः पात्रं प्रकोष्ठं प्रति नीतवान् । गोपालं तत्र आहूय सः अपृच्छत् - ''एतत् भवता कुतः प्राप्तम् ?'' इति ।

गोपालः सर्वं विस्तरेण निवेदितवान् । एतस्य श्रवणात् आचार्यः अवगतवान् यत् अरण्ये दृश्यमानः ज्येष्ठगोपालनामकः कः इति ।

''किं भवान् तम् अग्रजं मह्यं दर्शयितुं शक्नुयात् ?'' इति कुतूहलेन अपृच्छत् आचार्यः ।

''कुतो न ? दर्शयिष्यामि एव'' इति सोत्साहम् अवदत् गोपालः ।

अनन्तरक्षणे एव गोपालः आचार्यः च अरण्यं गतवन्तौ । प्रतिदिनम् इव तस्मिन्



*ऐश्वर्यस्य सौजन्यं विभूषणम् । शौर्यस्य वाक्संयमः भूषणम् । विद्यायाः विनयः, धनस्य पात्रे व्ययः, सामर्थ्यस्य क्षमा च भूषणानि । सुशीलता तु सर्वेषां भूषणं भवति ।*
*- भर्तृहरिः*

अपि दिने गोपालः अग्रजम् उच्चैः आहूतवान् । किन्तु दीर्घकालः अतीतः चेदपि ज्येष्ठगोपालः प्रत्यक्षः न जातः । आचार्यस्य नेत्राभ्याम् अश्रूणि निर्गतानि ।

एषा घटना बालगोपाले उद्वेगम् अजनयत् । सः उच्चस्वरेण अवदत् - ''अग्रज ! किमर्थम् अद्य न आगतं भवता ? मया बहुवारम् आहूतम् । बहुधा प्रतीक्षा अपि कृता । तथापि भवान् न आगतः । यदि भवता अत्र न आगम्यते तर्हि अग्रे कदापि - पुनः कदाचिदपि - भवता सह न क्रीडिष्यामि'' इति ।

तदा ज्येष्ठगोपालस्य स्वरः श्रुतः - ''मित्र ! यथा भवतः तथा ममापि क्रीडने महान् उत्साहः अस्ति एव । किन्तु अद्य कश्चन क्लेशः अस्ति । अतः आगच्छन् नास्मि । भवता सह स्थितस्य आचार्यस्य मद्दर्शने समुत्सुकता श्लाघनीया एव । किन्तु मद्दर्शनकालः न सन्निहितः । तेन प्रतीक्षा करणीया । तादृशः कालः कदाचित् तेन प्राप्यते एव । तावत् त्वरा न करणीया । योग्यतां वर्धयितुं तेन विशेषप्रयासः करणीयः'' इति ।

''आचार्य ! किं भवता श्रुतम् ?'' इति गोपालः अपृच्छत् ।

''न'' इति अवदत् आचार्यः ।

''न श्रुतम् एव भवता ? मया तु सुस्पष्टं सर्वं श्रुतम्'' इति वदन् गोपालः अग्रजेन उक्तं सर्वं गुरुम् उक्तवान् ।

सर्वं श्रुत्वा आचार्यः आनन्दाश्रूणि स्रावयन् अवदत् - ''वत्स ! तस्य आदेशः भवद्द्वारा प्राप्तः यत् ततः एव अहं धन्यः अस्मि । मया वरः प्राप्तः इव । भवतः मातुः श्रद्धा निश्चयेन श्लाघ्या । भवतः प्रीतिः अपि स्तुत्यर्हा एव'' इति ।



# एतन्मासे जातः महापुरुषः

# रवीन्द्रनाथठागोरः

आधुनिकभारतस्य अतिश्रेष्ठकवित्वेन ख्यातस्य रवीन्द्रनाथठागोरवर्यस्य जन्म मेमासस्य सप्तमे दिनाङ्के जातम् । १८६९ तमे वर्षे कलकत्तानगरे सः जन्म प्राप्तवान् । तस्य पिता देवेन्द्रनाथठागोरः, यश्च श्रेष्ठः सत्कुलजातः आसीत् ।

अल्पे एव वयसि रवीन्द्रनाथवर्यः लेखनप्रवृत्तिं दर्शितवान् । यदा सः विंशतिवर्षीयः आसीत् तदा एव बङ्किमचन्द्रवर्येण तदीया अपूर्वप्रतिभा अभिज्ञाता । बङ्किमचन्द्रवर्यः प्रसिद्धः कृतिकारः, 'वन्दे मातरम्' इत्येतस्य राष्ट्रगीतस्य रचयिता च ।



रवीन्द्रनाथवर्यः जगति यद्यपि पद्यकवित्वेन प्रसिद्धः, तथापि पद्यकृतयः एव तेन लिखिताः इति न । प्रबन्धाः, लघुकथाः, गद्यकथाग्रन्थाः चापि तेन लिखिताः । १९१३ तमे वर्षे 'गीताञ्जलि'-नामिकायाः पद्यकृतेः निमित्तं तेन नोबेल्प्रशस्तिः प्राप्ता । गीताञ्जलेः आंग्लानुवादः तेन स्वयं सज्जीकृतः ।

तस्य राष्ट्राभिमानः असदृशः । यदा 'भारतस्य राष्ट्रियताप्रतिपादकः' संन्यासी श्री अरविन्दोवर्यः आंग्लेयैः गृहीतः तदा रवीन्द्रनाथवर्येण एकस्यां स्फूर्तिदायिन्यां कवितायाम् उक्तम् - ''अरविन्दवर्य ! एषः रवीन्द्रनाथः अभिवन्दते भवन्तम् ...।''

राष्ट्राभिमानेन प्रेरितेन रवीन्द्रनाथवर्येण शान्तिनिकेतने विश्वभारतीनामकः नूतनविधः विश्वविद्यालयः प्रतिष्ठापितः, यत्र च राष्ट्रियशिक्षणस्य राष्ट्रियसंस्कृतेश्च विशेषप्राधान्यं भवति ।

बङ्गालीसाहित्यक्षेत्रे तस्य प्रभावः विशेषतः आसीत् । भारतीयसंस्कृतिक्षेत्रे साहित्यक्षेत्रे चापि तदीयः विशेषप्रभावः आसीत् एव । १९४१ तमे वर्षे अगस्ट्मासस्य सप्तमे दिनाङ्के सः परलोकं श्रितवान् ।

'क्रियेटिव् युनिटी' नामके स्वग्रन्थे ठागोरवर्यः वदति - ''प्रतिमानिर्माणार्थम् एव अस्माकं भूयान् समयः व्ययितः भवति, न तु प्रयोजनकरोद्देशार्थं, तर्कसम्मतयोजनार्थं वा । वास्तविकतायाः विविधमुखैः सम्बद्धानां प्रश्नानाम् उत्तरदाने वयं निरताः भवामः । एतस्मिन् प्रतिमा-निर्माणकार्ये बालः स्वपरिसरस्य अनुगुणं स्वकीयम् एकं परिवेषं निर्माति । सः बालः समुद्रे कामरूपिणः दर्शनं यथा तथा एतस्मिन् प्रपञ्चे वास्तविकतायाः पृष्ठभूमौ स्थितस्य क्रीडामित्रस्य दर्शनं प्राप्नोति । अभिव्यक्तिमात्रे सर्वथा अनुपकारके अपि कार्यजाते बालः तदर्थम् आसक्तिमान् भवति, यतः तत्र अनादिक्रीडामित्रस्य अस्तित्वं सः पश्यति । अनन्ते प्रतिमानिर्माणतः प्राप्यते कश्चन सन्तोषः । एषः एव अस्माकं कल्पनाभिव्यक्तेः स्फूर्तिकेन्द्रम् ।''



# भारतम्

## पूर्वम् इदानीं च



## मुम्बयी

### या च सप्तद्वीपानां समूहः आसीत्

वयम् इदानीं मुम्बयीनगरे सप्त द्वीपान् पार्थक्येन अभिज्ञातुं न शक्नुमः । किन्तु पूर्वम् एतेषां सप्तानां द्वीपानां समूहः एव 'मुम्बयी'शब्देन निर्दिश्यते स्म । स च शब्दः मुम्बादेवी (मुम्बाबायी इति वा) इत्येतस्मात् उत्पन्नः । मुम्बादेवी एतस्य नगरस्य अधिदेवता । तस्याः मूलं नाम तु अम्बा-भवानी इति । आंग्लभाषाप्रभावेण एतत् नगरं स्वातन्त्र्यानन्तरम् अपि 'बाम्बे'पदेन निर्दिश्यते स्म । एषु दिनेषु 'मुम्बयी' इति व्यवहारः आरब्धः ।

षोडशे शतके - तन्नाम १५१० तमे वर्षे - पोर्चुगीस्सेनानायकः अल्बुकर्कः (Albuqueque) गोवाप्रदेशं जितवान् । १५३४ तमे वर्षे सः तत्प्रदेशस्य शासकः जातः । सः एतं द्वीपसमूहं 'सुन्दरनगरी' (Prina Urbis) इति निर्दिष्टवान् ।

किन्तु तत्काले नगरपदेन निर्देष्टुं योग्यं स्थलं तत्र न आसीत् । विपणिसदृशानि उपनगराणि आसन् तत्र । क्रिस्तात् पूर्वं स च प्रदेशः एशियन्-रशियन्-रोमन्-वणिजां वाणिज्यस्थानम् आसीत् ।

यद्यपि सः द्वीपसमूहः पोर्चुगल्जनानाम् अधीनः आसीत्, तथापि तं विशेषमहत्त्वोपेतं न मतवन्तः ते । अतः ब्रिटिश्राजकुमारः द्वितीयचार्ल्सः यदा केथरिना डे ब्रगाञ्झेनामिकां राजकुमारीं परिणीतवान् तदा उपायनरूपेण तस्मै एषः भूभागः प्रदत्तः ।

एतं भूभागम् उपायनरूपेण प्राप्य राजकुमारः किं वा कुर्यात् ? यतः एतस्मात् प्रतिवर्षं तेन दशपौण्ड्मात्रमितः आयः प्राप्यते स्म । अतः सः ईस्ट्-इण्डियासंस्थायै तेनैव मूल्येन न्यासरूपेण एतं भूभागं ससन्तोषं दत्तवान् ।

गच्छता कालेन एते सप्त द्वीपाः परस्परसम्बद्धाः, प्रमुखभूभागेन चापि सम्बद्धाः अभवन् ।

अनन्तरकाले जाता तन्नगरीया वृद्धिः नितराम् आश्चर्यकरी । यत् पूर्वं दशपौण्ड्मात्रमितस्य आयस्य मूलम् आसीत् तदिदानीं महाराष्ट्रराज्यस्य राजधानी जातम् अस्ति । भारतस्य साम्पत्तिकराजधानी अपि





तदेव । प्रमुखवित्तकोषाणां केन्द्रीयकार्यालयाः अपि तस्मिन् एव नगरे सन्ति । स्टाक्-एक्स्चेञ्-व्यवहारस्य महाकेन्द्रम् अपि तदेव । आयकरद्वारा भारतसर्वकारेण यः आयः प्राप्यते तस्य ३३% मुम्बयीनगरात् एव प्राप्यते ।

भारते ऐदंप्राथम्येन १८५३ तमे वर्षे रेल्वेसञ्चारः आरब्धः । स च थाने-मुम्बयीनगरयोः मध्ये प्रवृत्तः । युरोपखण्डस्य प्रथमं नौकास्थानं मुम्बयी एव । देशस्य अतिविशालं नौकास्थानं तत् । भारतस्वातन्त्र्यसङ्ग्रामे अपि एतस्य नगरस्य प्रामुख्यम् आसीत् एव । भारतराष्ट्रियकाङ्ग्रेस्संस्थायाः प्रथमम् अधिवेशनं १८८५ तमे वर्षे मुम्बयीनगरे एव प्रवृत्तम् ।

इतिहासस्य विभिन्नघट्टान् स्मारयन्ति अत्रत्यानि स्मारकाणि । अफगान्चर्च्, गेट् वे आफ् इण्डिया, छत्रपतिशिवाजीरेल्वेस्थानकं (यच्च पूर्वं विक्टोरिया टर्मिनस् इति निर्दिश्यते स्म) महालक्ष्मीमन्दिरम् इत्यादीनि तेषु अन्यतमानि कानिचन ।

पूर्वं परशुरामः ध्यानार्थं समुद्रराजम् अल्पां भूमिं याचितवान् । समुद्रेण भूमिदानम् अनुमतम् । परशुरामः एकं वालुकालिङ्गं निर्माय मधुरजल-प्राप्त्यर्थम् एकं बाणं प्रयुक्तवान् । ततः बाणगङ्गा उत्पन्ना । वालुकायाम् उत्पन्नः वालुकेश्वरः तत्पार्श्वे स्थिता बाणगङ्गा च मलबारपर्वतसमीपे स्तः । एतौ अपि दर्शनयोग्यौ ।

मुम्बयीनगरे एव अत्यधिकप्रमाणेन चलनचित्र-निर्माण-संस्करणादिकार्यं प्रचलति ।

गणेशचतुर्थीपर्वकाले समग्रा नगरी उत्सवाचरणावेशयुक्ता भवति ।

इदानीं मुम्बयीनगरस्य जनसङ्ख्या ८८लक्षमिता । अत्र व्यवस्थात्मिकाः, वाणिज्यात्मिकाः, सांस्कृतिक्यः, शिक्षणसम्बद्धाः च संस्थाः महता प्रमाणेन सन्ति । नगरसीमाप्रदेशेषु लघूनि महान्ति च यन्त्रागाराणि सन्ति अनेकानि ।

पश्चिमसमुद्रहारस्य मध्यमणिः इव अस्ति मुम्बयीनगरम् । तत्रापि मेरिन्ड्रैव्प्रदेशः मलबार-पर्वतश्च आकर्षणकेन्द्रभूतौ । जगतः अतिसुन्दरनगरेषु अन्यतमम् अस्ति मुम्बयी । किन्तु अत्रत्यं जनसङ्ख्या-बाहुल्यम् एकम् एव तस्य चित्ताकर्षकतां ह्रासयति ।



# चिन्त्यताम् ! अभिव्यज्यताम्

एतस्मिन् अङ्के प्रकाशितानां प्रश्नानाम् उत्तरम् अग्रिमाङ्के प्रकाशयिष्यते । ततः पूर्वं - **चन्दमामा (संस्कृतम्) भारतावगति-प्रश्नोत्तरम्, अक्षरम्, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५** इत्येतस्मै सङ्केताय उत्तरं प्रेषयितुम् अर्हन्ति भवन्तः । किन्तु एतस्यां प्रश्नोत्तरस्पर्धायां स्वस्य भागग्रहणार्थम् अधोनिर्दिष्टायाः सर्जनात्मककृतेः प्रेषणम् अनिवार्यम् ।

एतस्यां सञ्चिकायां प्रकाशितासु कथासु का भवते विशेषतः अरोचत, किमर्थं च अरोचत इति शतशब्दैः एकं पत्रं लेखनीयम् । अध्यापकस्य प्रेषकस्य वा हस्ताक्षरेण प्रमाणीकृत्य नाम, वयः, कक्ष्यां, विद्यालयनाम (यदि अधीयमानम् अस्ति तर्हि), पूर्णसङ्केतं च लिखित्वा उपर्युक्तसङ्केताय प्रेषयन्तु ।

प्रथमपारितोषिकं **रू. १००० - ००**
द्वितीयपारितोषिकं **रू. ५०० - ००**
प्रोत्साहकपारितोषिकाणि (पञ्च)
प्रतिजनं **रू. २०० - ००**






## भारतावगतिप्रश्नः - ३

कश्चन तरुणः कश्चित् मुनिं दृष्ट्वा कश्चित् विषयम् अधिकृत्य तदीयं मार्गदर्शनं सम्प्रार्थितवान् । मुनिः झटिति तस्य उत्तरं किमपि न दत्तवान् । तरुणः उत्तरं प्रतीक्षमाणः उपविष्टवान् । मुनेः पत्नी कूपतः जलम् उद्धरन्ती आसीत् । तां मुनिः आहूतवान् । पत्युः आह्वानं श्रुत्वा जलोद्धरणकार्यं तत्रैव परित्यज्य सा गता । घटः तु लम्बते स्म । केनापि रज्जुः न गृहीता चेदपि घटः कूपे न पतितः । निराधारं स्थितः आसीत् घटः । 'या पतिव्रता सती पतौ आत्यन्तिकीं श्रद्धां दर्शयति सा विशेषसामर्थ्यं प्राप्तुम् अर्हति' इति सः तरुणः अवगतवान् ।

सः मुनिः कः ? तस्य पत्न्याश्च नाम किम् ?

अधोलिखितानां पौराणिकजनानां नगराणां च सम्बन्धः कः ?



चन्दमामा - विविधभाषामयी

# ! पुरस्कारः प्राप्यताम् !!!

## ामा






१. सा प्राचीना कृतिः का, यस्यां च वेताल-सम्बन्धिन्यः पञ्चविंशतिः (२५) कथाः सन्ति ?

२. कालिदासकाले उज्जैनूनगरस्य किं नाम आसीत् ?

३. कालिदासात् पूर्वं कः प्रसिद्धः रूपककारः कविः आसीत् ?

४. प्रसिद्धः कविः कः, यश्च आदौ राजा आसीत्, ततश्च योगी जातः ? तस्य कृतयः काः ?

५. वाल्मीकिरामायणस्य कः काण्डः कालान्तरे योजितः इति विश्वस्यते ?



एते अंशाः अवधातव्याः

**नियमाः -**

१. चन्दमामा इण्डिया लि., संस्थायाः उद्योगिनः, तेषां बान्धवाः, सहयोगिनः च एतस्यां स्पर्धायां भागग्रहणे अर्हाः न भवन्ति ।

२. निर्णायकानां निर्णयः एव अन्तिमः । एतद्विषये पत्रव्यवहारः न करणीयः ।

३. येषाम् अक्षराणि सुन्दराणि न भवन्ति, तेषाम् उत्तरं तिरस्क्रियते ।

४. परिणामः अगस्ट् - २००० सञ्चिकायां प्रकाशयिष्यते ।

५. उत्तराणि प्राप्तुम् अन्तिमदिनाङ्कः - ३० मे, २०००

अ. धृतराष्ट्रः - गान्धारः

आ. सावित्री - साल्वः

इ. सहदेवः - मद्रदेशः

ई. कर्णः - अङ्गदेशः

उ. बभ्रुवाहनः - मणिपुरम्

## अभिन्नपरम्पराद्योतिका






# भारतं प्रति अमेरिकाध्यक्षस्य आगमनम्



अमेरिकाध्यक्षः क्लिण्टन्वर्यः भारतम् आगत्य गतः । भारतं प्रति तस्य आगमनं पत्रिकादिषु विशेषतः चर्चितम् । महान् प्रचारः कृतः तस्य । भारतस्य सर्वासु पत्रिकासु क्लिण्टन्-आगमनविषये मासाधिककालं चर्चा प्रवृत्ता, विशेषवार्ताः प्रकाशिताः वा । सर्वराजकीयपक्षाणां नायकाः अपि विषयेऽस्मिन् स्वाभिप्रायान् प्रकाशितवन्तः । सामान्याः जनाः अपि तस्य आगमनम् अभिलक्ष्य लाभालाभ-प्रयोजनादिचर्चाम् अकुर्वन् ।

अमेरिकाध्यक्षस्य आगमनं किमर्थम् एतावत् प्राधान्यम् आवहत् ? अमेरिकायाः शक्तिशालिता एव एतस्य कारणम् ? स्यात् तदपि, किन्तु तदेव तु सर्वथा न । अमेरिका प्रजातन्त्रमूल्येषु विश्वसिति । भारतं तु प्रजाप्रभुत्वोपेतराष्ट्रेषु सुविशालम् । एतदेव तस्य आगमनस्य प्रमुखं कारणम् ।

१९४७ तमे वर्षे भारतस्य विभागः जातः । पाकिस्थानस्य उदयः जातः । किन्तु

तदनन्तरकाले अनेकानि वर्षाणि सर्वाधिकारिभिः एव पाकिस्थानस्य शासनं कृतम् । पाकिस्थानस्य अखण्डता न स्थिता । महतः रक्तपातस्य अनन्तरं बाङ्ग्लादेशः ततः पृथग्भूतः । पाकिस्थानीयानां कृते प्रजातन्त्रम् इतोऽपि गगनकुसुमायते, न तु हस्तलभ्यम् । इदानीम् अपि तत्र सेनाप्रमुखस्य सर्वाधिकारिणः शासनं प्रवर्तते । प्रजाप्रभुत्वपद्धत्या चितः प्रधानमन्त्री कारागारे स्थित्वा क्षणान् गणयति । एवं स्थिते अपि अमेरिकाध्यक्षः पाकिस्थाने काश्चन घण्टाः यापितवान् । 'तेन तथा न करणीयम् आसीत् । तत्र गमनेन सर्वाधिकारित्वस्य समर्थनं कृतम् इव भवति' इति केचन अभिप्रायं प्रकटितवन्तः । अन्ये केचन अन्यया दृष्ट्या एतां घटनां दृष्टवन्तः । 'सः पाकिस्थाने काश्चन घण्टाः यापितवान्, किन्तु भारते स्थितवान् कानिचन दिनानि ! अतः तस्य अनुरागः कुत्र इति स्पष्टम्' इति वदन्ति ते ।



देशानां परिस्थितिः पूर्वं यथा आसीत् तथा नास्ति इदानीम् । कालानुगुणं परिवर्तनं तत्रापि दृश्यते एव । अमेरिकायाः प्रतिस्पर्धित्वेन पूर्वं सोवियत्सङ्घः प्रबलः आसीत् । भारतं सोवियत्सङ्घेन सह मैत्रीपूर्णव्यवहारं करोति स्म । अतः अमेरिकया पाकिस्थानस्य तोषणार्थं प्रयासः कृतः । किन्तु परिस्थितिः परिवृत्ता । सोवियत्सङ्घस्य पतनं जातम् । अतः 'पाकिस्थानस्य सन्तुष्ट्यर्थं विशेषप्रयासः करणीयः नास्ति' इति अचिन्तयत् अमेरिकादेशः । एतत्काले एव अमेरिकीयैः बहुभिः, भारतेन प्रजाप्रभुत्वरक्षणार्थं कृताः प्रयासाः, भारतस्य राजनैतिकदृष्टिः च बहुधा प्रशंसिताः । भारतं शक्तिशालिराष्ट्ररूपेण विकासं प्राप्तुम् अर्हति इति अवगतवन्तः सन्ति ते । अतः अमेरिका-भारतयोः मध्ये मैत्रीपूर्णव्यवहारः भवेत् इति तेषाम् अभिलाषः । तस्यैव फलरूपेण प्रवृत्तम् अमेरिकाध्यक्षस्य भारतं प्रति आगमनम् ।

क्लिण्टनः भारतं प्रति आगतवान्, गतवान् च । विविधानि स्थलानि संस्थाः च तेन गतानि । केषुचित् सन्धिपत्रेषु हस्ताङ्कनम् अपि जातम् । एतस्य सर्वस्य परिणामः कः इति तु केषाञ्चित् मासानाम् अनन्तरम् एव स्फुटीभवेत् ।

# चित्रशीर्षिकास्पर्धा

अधस्तनचित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ? समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -



चन्दमामा
(संस्कृतम्)
'अक्षरम्'
८ उपमार्गः
गिरिनगरम्
बेङ्गलूरु-५६००८५





युक्ता शीर्षिका मे - २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका द्विसहस्रतमवर्षस्य जुलैमासे प्रकाशयिष्यते ।

## अभिनन्दनानि



'मार्च्'स्पर्धाशीर्षिकाप्रेषकः-
*श्री एम्. वि. काळे*
*उपासनासंस्कृतकेन्द्रम्,*
*देशिकेन्द्रमार्गः*
*कवठेकर, लातूरु - ४१३ ५१२*



*प्रथमचित्रम्* - कथा श्राव्यते अनुजायाः समक्षम् ।
*द्वितीयचित्रम्* - ग्रन्थोऽवलोक्यते समया गवाक्षम् ।

चन्दमामायाः वार्षिकं ग्राहकशुल्कं -
भारते रू.१२० - ००

Payment in favour of CHANDAMAMA INDIA LIMITED. For details address your enquries to :
Publication Division, Chandamama Buildings, Vadapalani, Chennai - 600 026.